वमुकस्तु संक्षुब्धस्तस्याः पुत्रार्थमुद्यतः। तपोघोरं करिष्यामिजयाय त्रिदिवौकसाम्
तच्छ्रुत्वा वचो देवः पद्मगर्भोद्भवस्तदा। उवाच दैत्यराजानं प्रसन्नश्चतुराननः ॥१६॥

ब्रह्मोवाच ।

अलन्ते तपसा वत्स! मा क्लेशे दुस्तरे विश। पुत्रस्तेतारको नाम भविष्यति महाबलः
सीमन्तिनीकान्त धम्मिल्लस्यविमोक्षण। इत्युक्तोदैत्यनाथस्तु प्रणिपत्य पितामहम्
गत्यानन्दयामास महिषीं हर्षिताननः। तौ दम्पती कृतार्थौ तु जग्मतुः स्वाश्रमं मुदा
श्राङ्गनाहितं गर्भं वराङ्गा वरवर्णिनी। पूर्णं वर्षसहस्रञ्च दधारोदर एव हि ॥ २० ॥
तो वर्षसहस्रान्ते वराङ्गी सुषुवे सुतम्। जायमाने तु दैत्येन्द्रे तस्मिन् लोकभयङ्करे

चचाल सकला पृथ्वी समुद्राश्च चकम्पिरे।
चेलुर्महीधराः सर्वे वबुर्वाताश्च भीषणाः ॥२२॥

जुर्जप्यं मुनिवरा नेदुर्व्यालमृगा अपि। चन्द्रसूर्या जहुः कान्तिं सनीहारादिशोऽभवन्
जाते महासुरे तस्मिन् सर्वे चापि महासुराः। आजग्मुर्हर्षितास्तत्र तथाचासुरयोषितः
जगुर्हर्षसमाविष्टा ननृतुश्चासुराङ्गनाः। ततो महोत्सवो जातो दानवानां द्विजोत्तमाः
विषण्णमनसो देवाः समहेन्द्रास्तदाभवन्। वराङ्गी स्वसुतं दृष्ट्वा हर्षेणापूरिता तदा ॥२६
मेने न दैत्येन्द्रविजयन्तु तदैव सा। जातमात्रस्तु दैत्येन्द्रस्तारकश्चण्डविक्रमः॥२७॥
भिषिक्तोऽसुरैः सर्वैः कुजम्भमहिषादिभिः। सर्वासुरमहाराज्ये पृथिवीतुलनक्षमैः ॥
नु प्राप्य महाराज्यं तारको मुनिसत्तमाः। उवाच दानवश्रेष्ठान् युक्तियुक्तमिदं वचः ॥
इति श्रीमत्स्यपुराणे तारकासुरोपाख्याने षट्चत्वारिंशदधिकशततमोऽध्यायः।

---

## सप्तचत्वारिंशदधिकशततमोऽध्यायः

### तारकासुरोपाख्यानम् ।

तारक उवाच ।

शृणुध्वमसुराः! सर्वे वाक्यं ममममहाबलाः। श्रेयसेक्रियतांबुद्धिःसवःकृत्यस्य सन्निधौ

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वंशक्षयकरा देवाः सर्वेषामेव दानवाः । अस्माकं ज्ञातिधर्मो वै विरूढं वैरमक्षयम् ।
वयमद्य गमिष्यामः सुराणां निग्रहाय तु । स्वबाहुबलमाश्रित्य सर्व एवमसंशयः ।

किन्तु ना तपसा युक्तो मन्येऽहं सुरसङ्गमम् ।
अहमादौ करिष्यामि तपो घोरन्दितेः सुताः ॥४॥
ततः सुरान् विजेष्यामो भोक्ष्यामोऽथ जगत्त्रयम् ।
स्थिरोपायो हि पुरुषः स्थिरश्रीरपि जायते ॥५॥

रक्षितुं नैव शक्नोति चपलश्चपलाः श्रियः । तच्छ्रुत्वा दानवाःसर्वेवाक्यंतस्यासुरस्य ।

साधु साध्वित्यवोचंस्ते तत्र दैत्याः सविस्मयाः ।
सोऽगच्छत्पारियात्रस्य गिरेः कन्दरमुत्तमम् ॥७॥

सर्वर्तुकुसुमाकीर्णं नानौषधिविदीपितम् । नानाधातुरसस्रावचित्रं नानागुहागृहम् ।
गहनैः सर्वतो गूढं चित्रकल्पद्रुमाश्रयम् । अनेकाकारबहुलं पृथक् पक्षिकुलाकुलम् ।
नानाप्रस्रवणोपेतं नानाविधजलाशयम् । प्राप्य तत् कन्दरं दैत्यश्चचार विपुलं तपः ।

निराहारः पञ्चतपा पत्रभुग्वारिभोजनः ।
शतं शतं समानान्तु तपांस्येतानि सोऽकरोत् ॥११॥
ततः स्वदेहादुत्कृत्य कर्षं कर्षं दिने दिने ।
मांसस्याग्नौ जुहावासौ ततो निर्मांसताङ्गतः ॥१२॥

तस्मिन्निर्मांसतां याते तपोराशित्वमागते । जज्वलुः सर्वभूतानि तेजसा तस्य सर्वतः ।
उद्विग्नाश्च सुराः सर्वे तपसा तस्य भीषिताः । एतस्मिन्नन्तरे ब्रह्मा परमं तोषमागतः ।
तारकस्य वरं दातुं जगाम त्रिदशालयात् । प्राप्य तं शैलराजानं स गिरेःकन्दरस्थितम् ।

उवाच तारकं देवो गिरा मधुरया युतः ।

ब्रह्मोवाच ।

पुत्रालं तपसा तेऽस्तु नास्त्यसाध्यं तवाऽधुना ॥१६॥

वरं वृणीष्व रुचिरं यत्ते मनसि वर्त्तते । इत्युक्तस्तारको दैत्यः प्रणम्यात्मभुवं विभुम् ।

उवाच प्राञ्जलिर्भूत्वा प्रणतः पृथुविक्रमः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तारक उवाच ।

देव ! भूतमनोवास ! वेत्सि जन्तुविचेष्टितम् ॥१८॥
प्रतिकृताकाङ्क्षी जिगीषुः प्रायशो जनः । वयञ्च जातिधर्मेण कृतवैराः सहामरैः ॥
तैश्च निःशेषिता दैत्याः क्रूरैः सन्त्यज्य धर्मिताम् ।
तेषामहं समुद्धर्त्ता भवेयमिति मे मतिः ॥२०॥
अवध्यं सर्वभूतानामस्त्राणाञ्च महौजसाम् । स्यामहं परमो ह्येष वरो मम हृदि स्थितः
तन्मे देहि देवेश ! नान्यो मे रोचते वरः । तमुवाच ततो दैत्यं विरिञ्चिः सुरनायकः
युज्यन्ते विना मृत्युं देहिनो दैत्यसत्तम । यतस्ततोऽपि वरय मृत्युं यस्मान्न शङ्कसे
सञ्चिन्त्य दैत्येन्द्रः शिशोर्वै सप्तवासरात् । वव्रे महासुरो मृत्युमवलेपनमोहितः
ब्रह्मा चास्मै वरं दत्वा यत्किञ्चिन्मनसेप्सितम् ।
जगाम त्रिदिवं देवो दैत्योऽपि स्वकमालयम् ॥२५॥
तीर्णं तपसस्तं तु दैत्यं दैत्येश्वरास्तथा । परिवव्रुः सहस्राक्षं दिवि देवगणा यथा ॥
स्मिन् महति राज्यस्य तारके दैत्यनन्दने । ऋतवो मूर्त्तिमन्तश्च स्वकालगुणबृंहिताः
अभवन् किङ्करास्तस्य लोकपालाश्च सर्वशः ।
कान्तिद्युतिर्धृति र्मेधाः श्रीरवेक्ष्य च दानवम् ॥२८॥
चित्रगुर्गुणा कीर्णा निश्छिद्राः सर्व एव हि । कालागुरुविलिप्ताङ्गं महामुकुटभूषणम् ॥
वराङ्गदनद्धाङ्गं महासिंहासने स्थितम् । वीजयन्त्यप्सरः श्रेष्ठाः भृशं मुञ्चन्ति नैव ताः
र्कौ दीपमार्गेषु व्यजनेषु च मारुतः । कृतान्तोऽग्रेसरस्तस्य बभूवुर्मुनिसत्तमाः ॥
प्रयाति काले तु वितते तारकासुरः । बभाषे सचिवान् दैत्यः प्रभूतवरदर्पितः ॥

तारक उवाच ।

येन कारणं किं मे त्वनाक्रम्य त्रिविष्टिपम् । अनिर्याप्य सुरैर्वैरं का शान्तिर्हृदयेमम
नोऽद्यापि यज्ञांशानमरा नाक एव हि । विष्णुः श्रियं न जहति तिष्ठते च गतभ्रमः
याभिःस्वर्गनारीभिःपीड्यन्तेऽमरवल्लभाः । सोत्पलामदिरामोदादिविक्रीड़ायनेषु च
न्मा जन्म न यःकश्चिद्घटयेत्पौरुषंनरः । जन्म तस्य वृथा भूतमजन्मना तु विशिष्यते



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

माता पितृभ्यां न करोति कामान् बन्धूनशोकान् न करोति यो वा।
कीर्त्तिं हि वार्नार्जयते हिमाभां पुमान् स जातोऽपि मृतो मतं मे ॥ ३७॥
तस्माज् जयायामरपुङ्गवानां त्रैलोक्यलक्ष्मीहरणाय शीघ्रम्।
संयोज्यतां मे रथमष्टचक्रं बलञ्च मे दुर्जयदैत्यचक्रम्।
ध्वजञ्च मे काञ्चनपट्टनद्धं च्छत्रञ्च मे मौक्तिकजालबद्धम् ॥३८॥

तारकस्य वचः श्रुत्वा ग्रसनो नाम दानवः। सेनानीर्दैत्यराजस्य तथा चक्रे बलानि
आहत्य भेरीं गम्भीरां दैत्यानाहूय सत्वरः। तुरगाणां सहस्रेण चक्राष्टकविभूषि
शुक्लाम्बरपरिष्कारं चतुर्योजनविस्तृतम्। नानाक्रीडागृहयुतं गीतवाद्यमनोहरम्॥
विमानमिव देवस्य सुरभर्त्तुः शतक्रतोः। दशकोटीश्वरा दैत्या दैत्यास्ते चण्डवि
तेषामग्रेसरो जम्भः कुजम्भोऽनन्तरस्ततः। महिषः कुञ्जरो मेघः कालनेमिर्निमि
मथनो जम्भकः शुम्भो दैत्येन्द्रा दश नायकाः। अन्येऽपिशतशस्तस्यपृथिवीदल
दैत्येन्द्रा गिरिवर्ष्माणः सन्ति चण्डपराक्रमाः। नानायुधप्रहरणा नानाशस्त्रास्त्रपा
तारकस्याभवत् केतू रौद्रः कनकभूषणः। केतुना मकरेणापि सेनानीर्ग्रसनोऽभि
पैशाचं यस्य वदनं जम्भस्यासीदयोमयम्। खरं विधूतलाङ्गूलं कुजम्भस्याभवद्
महिषस्य तु गोमायुर्केतोर्हैमंतदाभवत्। ध्वाङ्क्षंध्वजेतुशुम्भस्यकृष्णायोमयमु

अनेकाकारविन्यासाश्चान्येषान्तु ध्वजास्तथा।
शतेन शीघ्रवेगानां व्याघ्राणां हेममालिनाम् ॥ ४६ ॥
ग्रसनस्य रथो युक्तो किङ्किणीजालमालिनाम्।
शतेनापि च सिंहानां रथो जम्भस्य दुर्जयः ॥५०॥

कुजम्भस्य रथो युक्तः पिशाचवदनैः खरैः। रथस्तु महिषस्योष्ट्रैर्गजस्य तु तुरङ्ग
मेघस्य द्वीपिभिर्भीमैः कुञ्जरैः कालनेमिनः। पर्वताभैः समारूढो निमिर्मत्तैर्महागजै
चतुर्दन्तैर्गन्धवद्भिः शिक्षितैर्मेघभैरवैः। शतहस्तायते कृष्णे तुरङ्गैर्हेमभूषणैः ॥ ५
सितचामरजालेन शोभिते दक्षिणां दिशम्। सितचन्दनचार्वङ्गो नानापुष्पस्रजोज्
मथनो नाम दैत्येन्द्रःपाशहस्तोव्यराजत। जम्भकःकिङ्किणीजालमालमुष्ट्रं समारू

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

...कुक्कुमहामेषमारूढः शुम्भदानवः । अन्येऽपि दानवा वीरा नानावाहनगामिनः ॥५६
...विचित्रकर्माणः कुण्डलोष्णीषभूषणाः । नानाविधोत्तरासङ्गा नानामाल्यविभूषणाः
नानासुगन्धिगन्धाढ्या नानावन्दिजनस्तुताः ।
नानावाद्यपरिष्पन्दाश्चाग्रेसरमहारथाः ॥५८॥
नानाशौर्यकथासक्तास्तस्मिन् सैन्ये महासुराः ।
तद्बलं दैत्यसिंहस्य भीमरूपं व्यजायत ॥५६॥
प्रमत्तचण्डमातङ्गतुरङ्ग रथसङ्कुलम् । प्रतस्थेऽमरयुद्धाय बहुपत्तिपताकिनम्
एतस्मिन्नन्तरे वायुर्देवदूतोऽम्बरालये ।
दृष्ट्वा स दानवबलं जगामेन्द्रस्य शंसितुम् ॥ ६१ ॥
...त्वा तु सभां दिव्यां महेन्द्रस्य महात्मनः । शशंसमध्ये देवानांतत्कार्यंसमुपस्थितम्
...त्वा देवराजस्तु निमीलितविलोचनः । बृहस्पतिमुवाचेदं वाक्यं काले महाभुजः

इन्द्र उवाच ।

...प्नोति विमर्दोऽयं देवानांदानवैःसह । कार्यं किमिति तद्ब्रूहि नीत्युपायसमन्वितम्
श्रुत्वा तु वचनं महेन्द्रस्य गिरां पतिः । इत्युवाच महाभागो बृहस्पतिरुदारधीः
...पूर्वा स्मृता नीतिश्चतुरङ्गाम्पताकिनीम् । जिगीषतां सुरश्रेष्ठ ! स्थितिरेषासनातनी
...भेदस्तथा दानं दण्डश्चाङ्गचतुष्टयम् । नीतौ क्रमाद्देशकालरिपुयोग्यक्रमादिदम् ॥
...दैत्येषु नैवास्ति यतस्ते लब्धसंश्रयाः । जातिधर्मेण वा भेद्या दानंप्राप्तश्रियेचकिम्
...ऽप्युपायो दण्डोऽत्र भवता यदि रोचते । दुर्जनेषु कृतंसाम महद्यातिचवन्ध्यताम्
...दिति व्यवस्यन्तिक्रूराःसाममहात्मनाम् । ऋजुतामार्य्यबुद्धित्वंदयानीतिव्यतिक्रमम्
मन्यन्ते दुर्जना नित्यं साम चापि भयोदयात् ।
तस्माद् दुर्जनमाक्रान्तुं श्रेयान् पौरुषसंश्रयः ॥ ७१ ॥
...न्ते तु क्रिया युक्ता सतामेतन्महाव्रतम् । दुर्जनः सुजनत्वाय कल्पते न कदाचन ।
...नोऽपिस्वभावस्यत्यागंवाञ्छेत् कदाचन । एवंमेबुद्ध्यते बुद्धिर्भवन्तोऽत्रव्यवस्यताम्
...युक्तः सहस्राक्ष एवमेवेत्युवाच तम् । कर्त्तव्यतां स सञ्चिन्त्य प्रोवाचामरसंसदि ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इन्द्र उवाच ।

सावधानेन मे वाचं शृणुध्वं नाकवासिनः ! ।
भवन्तो यज्ञभोक्तारस्तुष्टात्मानोऽतिसात्विकाः ॥ ७५ ॥

स्वे महिम्नि स्थिता नित्यं जगतः परिपालकाः । भवतश्चानिमित्तेन बाधन्तेदानवे
तेषां सामादि नैवास्ति दण्डएवविधीयताम् । क्रियतां समरोद्योगः सैन्यंसंयुज्य
आद्रियन्तां च शस्त्राणिपूज्यन्तामस्त्रदेवताः । वाहनानि च यानानि योजयन्तुस
यमं सेनापतिं कृत्वा शीघ्रमेवं दिवौकसः । इत्युक्ताः समनह्यन्त देवानां ये प्रधान
वाजिनामयुतेनाजौहे मघण्टापरिष्कृतम् । नानाश्चर्यगुणोपेतं संप्राप्तं सर्वदैवतैः
रथं मातलिना क्लृप्तं देवराजस्य दुर्जयम् । यमो महिषमास्थाय सेनाग्रे समवर्त्तत
चण्डकिङ्करवृन्देन सर्वतः परिवारितः । कल्पकालोद्धतज्वालापूरिताम्बरलोचनः
हुताशनश्छागरूढः शक्तिहस्तो व्यवस्थितः । पवनोऽङ्कुशपाणिस्तु विस्तारितमहा
भुजगेन्द्रसमारूढो जलेशो भगवान् स्वयम् । नरयुक्तरथे देवो राक्षसेशो विय

तीक्ष्णखड्गयुतो भीमः समरे समवस्थितः ।
महासिंहरवो देवो धनाध्यक्षो गदायुधः ॥ ८५ ॥

चन्द्रादित्यावश्विनौ च चतुरङ्गबलान्वितौ । राजभिः सहितास्तस्थुर्गन्धर्वा हेमभू
हेमपीठोत्तरासङ्गाश्चित्रवर्मरथायुधाः । नाकपृष्ठशिखण्डास्तु वैदूर्यमकरध्वजाः
जपारक्तोत्तरासङ्गा राक्षसा रक्तमूर्द्धजाः । गृध्रध्वजा महावीर्या निर्मलायोविभू
मुसलासिगदहस्ता रथे चोष्णीषदंशिताः । महामेघरवा नागा भीमोल्काशनिहे
यक्षाः कृष्णाम्बरभृतो भीमबाणधनुर्द्धराः । ताम्रोलूकध्वजा रौद्रा हेमरत्नविभूष
द्वीपिचर्मोत्तरासङ्गं निशाचरबलं बभौ । गार्ध्रपत्रध्वजप्रायमस्थिभूषणभूषितम् ॥
मुसलायुधदुष्प्रेक्ष्यं नानाप्राणिमहारवम् । किन्नराः श्वेतवसनाः सितपत्रिपता
मत्तेभवाहनप्रायास्तीक्ष्णतोमरहेतयः । मुक्ताजालपरिष्कारो हंसो रजतनिर्मितः
केतुर्जलाधिनाथस्य भीमधूमध्वजानिलः । पद्मरागमहारत्नविटपं धनदस्य तु ॥

ध्वजं समुच्छ्रितं भाति गन्तुकाममिवाम्बरम् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वृकेण काष्ठलोहेन यमस्यासीन्महाध्वजः ॥ ६५ ॥
क्षसेशस्य केतोर्वै प्रेतस्य मुखमावभौ । हेमसिंहध्वजौ देवौ चन्द्रार्कावमितद्युती ॥
म्भेन रत्नचित्रेण केतुरश्विनयोरभूत् । हेममातङ्गरचितं चित्ररत्नपरिष्कृतम् ॥ ६७ ॥
ध्वजं शतक्रतोरासीत् सितचामरमण्डितम् । सनागयक्षगन्धर्वमहोरगनिशाचरा ॥६८॥
सेना सा देवराजस्य दुर्जया भुवनत्रये । कोटयस्तास्त्रयस्त्रिंशद्देवे देवनिकायिनाम् ॥
हिमाचलाभे सितकर्णचामरे सुवर्णपद्मामलसुन्दरस्रजि ।
कृताभिरागोज्ज्वलकुङ्कुमाङ्कुरे कपोललीलालिकदम्बसङ्कुले ॥ १००॥
स्थितस्तदैरावतनामकुञ्जरे महाबलश्चित्रविभूषणाम्बरः ।
विशालवस्त्रांशुवितानभूषितः प्रकीर्णकेयूरभुजाग्रमण्डलः ॥
सहस्रदृक् वन्दिसहस्रसंस्तुतस्त्रिविष्टपेऽशोभत पाकशासनः ॥१०१॥
तुरङ्गमातङ्गबलौघसङ्कुला सितातपत्रध्वजराजिशालिनी ।
चमूश्च सा दुर्जयपत्रिसन्तता विभाति नानायुधयोधदुस्तरा ॥१०२॥
इति श्रीमत्स्यपुराणे तारकोपाख्याने सप्तचत्वारिंशदधिकशततमोऽध्यायः ।

---

# अष्टचत्वारिंशदधिकशततमोऽध्यायः

## तारकोपाख्याने देवदानवयुद्धवर्णनम् ।

सूत उवाच ।

सुरासुराणां सम्मर्दस्तस्मिन्नत्यन्तदारुणे । तुमुलोऽतिमहानासीत् सेनयोरुभयोरवि ।
र्जितां देवदैत्यानां शङ्खभेरीरवेण च । तुर्याणाञ्चैव निर्घोषैर्मातङ्गानाञ्च बृंहितैः ॥२॥
नां हयवृन्दानां रथनेमिस्वनेन च । ज्याघोषेण च शूराणान्तुमुलोऽतिमहानभूत् ॥३
समासाद्योभये सेने परस्परजयैषिणाम् । रोषेणातिपरीतानान्त्यक्तजीवितचेतसाम् ॥४
समासाद्य तु तेऽन्योन्यं प्रक्रमेण विलोमतः । रथेनासक्तपादातो रथेन चतुरङ्गमः ॥५॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हस्ती पादातिसंयुक्तो रथिना च क्वचिद्रथी। मातङ्गेनापरो हस्ती तुरङ्गैर्बहुभिर्गः
पदातिरेको बहुभिर्गजैर्मत्तैश्च युज्यते। ततः प्रासाशनिगदाभिन्दिपालपरश्वधैः
शक्तिभिः पट्टिशैः शूलैर्मुद्गरैः कड़पैर्गडैः। चक्रैश्च शङ्कुभिश्चैव तोमरैरङ्कुशैः स्थितैः
कर्णिकालीकनाराचवत्सदन्तार्द्धचन्द्रकैः। भल्लैश्च शतपत्रैश्च शुकतुण्डैश्च निर्मलैः
वृष्टिरत्यद्भुताकारा गगने समदृश्यत। संप्रच्छाद्य दिशः सर्वास्तमोमयमिवाकरो
न प्राज्ञायत ते ऽन्योऽन्यं तस्मिंस्तमसि सङ्कुले। अलक्ष्यंविसृजन्तस्तेहेतिसङ्घातमु
पतितं सेनयोर्मध्ये निरीक्षन्ते परस्परम्। ततोध्वजैर्भुजैश्छत्रैः शिरोभिश्च सकुण्ड
गजैस्तुरङ्गैः पादातैः पतद्भिः पतितैरपि। आकाशसरसोभ्रष्टैः पङ्कजैरिव भूस्तृता
भग्नदन्ता भिन्नकुम्भाश्छिन्नदीर्घमहाकराः। गजाः शैलनिभाः पेतुर्धरण्यां रुधिर
भग्नेषा दण्डचक्राक्षा रथाश्च शकलीकृता। पेतुः शकलतां यातास्तुरङ्गाश्च सहस्र
ततोऽसृक् ह्रददुस्तारा पृथिवी समजायत। नद्यश्च रुधिरावर्ता ह्र्दः पिशिता
वेतालाक्रीड़मभवत्तत् सङ्कुलरणाजिरम् ॥ १७ ॥

इति श्रीमत्स्यपुराणे तारकासुरोपाख्याने देवासुरयुद्धेऽष्टचत्वारिंशदधिक-
शततमोऽध्यायः।

---

## ऊनपञ्चाशदधिकशततमोऽध्यायः

### तारकोपाख्याने देवासुरयुद्धवर्णनम्।

सूत उवाच।

अथ ग्रसनमालोक्य यमः क्रोधविमूर्च्छितः। ववर्ष शरवर्षेण विशेषेणाग्निवर्चस
स विद्धो बहुभिर्बाणैर्ग्रसनोऽतिपराक्रमः। कृतप्रतिकृताकाङ्क्षी धनुरानम्य भैरव
शतैः पञ्चभिरत्युग्रैः शराणां यममर्दयन्।
स विचिन्त्य यमो बाणान् ग्रसनस्यातिपौरुषम् ॥ ३ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[ब]ाणवृष्टिभिरुग्राभिर्यमोऽग्रसनमर्दयन् । कृतान्तशरवृष्टिन्तां वियति प्रतिसर्पिणीम् ॥४॥
[वि]च्छेद शरवर्षेण ग्रसनो दानवेश्वरः । विफलां तां समालोक्य यमस्तां शरसन्ततिम्
[स] विचिन्त्य शरव्रातं ग्रसनस्य रथं प्रति । चिक्षेप मुद्गरं घोरन्तरसा तस्य चान्तकः ॥
[स] तं मुद्गरमायान्तमुत्प्लुत्य गगनस्थितम् । जग्राह वामहस्तेन याम्यं दानवनन्दनः ॥
[त]मेव मुद्गरं गृह्य यमस्य महिषं रुषा । पातयामास वेगेन स पपात महीतले ॥ ८ ॥
उत्प्लुत्याथ यमस्तस्मान् महिषान्निष्पतिष्यतः ।
प्रासेन ताड़यामास ग्रसनं वदने दृढ़म् ॥ ६ ॥
स तु प्रासप्रहारेण मूर्च्छितोऽन्यपतद्भुवि । ग्रसनं पतितं दृष्ट्वा जम्भो भीमपराक्रमः ॥
[य]मस्य भिन्दिपालेन प्रहारमकरोद्धृदि । यमस्तेन प्रहारेण सुस्राव रुधिरं मुखात् ॥
[कृ]तान्तमर्दितं दृष्ट्वा गदापाणिर्धनाधिपः । वृतो यक्षायुतशतैर्जम्भं प्रत्युद्ययौ रुषा ॥१२॥
जम्भो रुषा तमायान्तं दानवानीकसंवृतः । उवाचप्राज्ञोवाक्यन्तु यथा स्निग्धेनभाषितम्
ग्रसनो लब्धसंज्ञोऽथ यमस्य प्राहिणोद्गदाम् ।
मणिहेमपरिष्कारां गुर्वीमरिविमर्दिनीम् ॥ १४ ॥
[ता]मप्रतर्क्यां संप्रेक्ष्य गदां महिषवाहनः । गदायाः प्रतिघातार्थं जगद्दलनभैरवम् ॥१५
[द]ण्डं मुमोच कोपेन ज्वालामालासमाकुलम् । सगदां वियतिप्राप्य रराासाम्बुधरो यथा
[स]ङ्घट्टमभवत्ताभ्यां शैलाभ्यामिव दुःसहम् । ताभ्यां निष्पेषनिर्ह्रादजड़ीकृतदिगन्तरम् ॥
जगद्व्याकुलतां गतं प्रलयागमशङ्कया । क्षणात् प्रशान्तनिह्रादं ज्वलदुल्कासमाचितम्
निष्पेषेण तयोर्भीममभूद्गगनगोचरम् । निहत्याथ गदां दण्डस्ततोग्रसनमूर्द्धनि ॥१६॥
हत्वा श्रियमिवानर्थो दुर्वृत्तस्यापतद्दृढ़ः ।
स तु तेन प्रहारेण दृष्ट्वा सतिमिरादिशः ॥ २० ॥
पपात भूमौ निःसंज्ञो भूमिरेणुविभूषितः । ततो हाहारवो घोरः सेनयोरुभयोरभूत् २१
ततो मुहूर्त्तमात्रेण ग्रसनः प्राप्य चेतनाम् ।
अपश्यत् स्वान्तनुं ध्वस्तां विलोलाभरणाम्बराम् ॥ २२ ॥
स चापि चिन्तयामास कृते प्रतिकृतिक्रियाम् ।मद्विधे वस्तुनिपुंसि प्रभोःपरिभवोदयात्
CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मय्याश्रितानि सैन्यानि जिते मयि विनाशिता ।
असम्भावित एवास्तु मनः स्वच्छन्दचेष्टितः ॥ २४ ॥
न तु व्यर्थशतोद्घुष्टसम्भावितघनो नरः । एवं सञ्चिन्त्य वेगेन समुत्तस्थौ महाव
मुद्गरं कालदण्डाभं गृहीत्वा गिरिसन्निभः । ग्रसनो घोरसङ्कल्पः सन्दष्टौष्ठपुट
रथेन त्वारतो गच्छन्नाससादान्तकं रणे । समासाद्य यमं युद्धे ग्रसनो भ्राम्य मुद्ग
वेगेन महता रौद्रश्चिक्षेप यममूर्द्धनि । विलोक्य मुद्गरं दीप्तं यमः सम्भ्रान्तलोचनः
वञ्चयामास दुर्द्धर्षं मुद्गरं स महाबलः । तस्मिन्नपसृते दूरं चण्डानां भीमकर्मणा
याम्यानां किङ्कराणान्तु सहस्रं निष्पिपेष ह ।
ततस्तां निहतां दृष्ट्वा घोरां किङ्करवाहिनीम् ॥ ३० ॥
अगमत् परमं क्षोभं नानाप्रहरणोद्यतः । ग्रसनस्तु समालोक्य तां किङ्करमयींश्चमू
मेने यमसहस्राणि सृष्टानि यममायया । निग्राह्य ग्रसनः सेनां विसृजन्नस्त्रवृष्टयः ॥
कल्पान्तघोरसङ्काशो बभूव क्रोधमूर्च्छितः ।
कांश्चिद्विभेद शूलानि कांश्चिद्बाणैरजिह्मगैः ॥ ३३ ॥
कांश्चित्पिपेष गदया कांश्च मुद्गरवृष्टिभिः । केचित्प्रासप्रहारैश्च दारुणैस्ताडितास्त
अपरे बहुशस्तस्य ललम्बुर्बाहुमण्डले । शिलाभिरपरे जघ्नुर्द्रुमैरन्यैर्महोच्छ्रयैः ॥
तस्यापरे तु गात्रेषु दशनैरपि दंशयन् । अपरे मुष्टिभिः पृष्ठं किङ्कराः प्रहरन्ति च ॥
अभिद्रुतस्तथा घोरैर्ग्रसनः क्रोधमूर्च्छितः । उत्सृज्य गात्रं भूपृष्ठे निष्पिपेष सहस्र
कांश्चिदुत्थाय मुष्टीभिर्जघ्ने किङ्करसंश्रयान् । स तु किङ्करयुद्धेन ग्रसनः श्रममाप्तव
तमालोक्य यमः श्रान्तं निहतांश्च स्ववाहिनीम् ।
आजगाम समुद्यम्य दण्डं महिषवाहनः ॥ ३९ ॥
ग्रसनस्तु समायान्तमाजघ्ने गदयोरसि । अचिन्तयित्वा तत्कर्म्म ग्रसनस्यान्तकोऽ
जघ्ने रथस्य मूर्द्धन्यात् व्याघ्रान् दण्डेन कोपनः ।
स रथो दण्डमथितैर्व्याघ्रैरर्द्धैर्विकृष्यते ॥ ४१ ॥
संशयः पुरुषस्येव चित्तं दैत्यस्य तद्रथम् । समुत्सृज्य रथं दैत्यः पदातिर्धरणीगतः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यमं भुजाभ्यामादाय योधयामास दानवः। यमोऽपि शस्त्राण्युत्सृज्य बाहुयुद्धेष्ववर्त्तत

ग्रसनः कटिवस्त्रैस्तु यमं गृह्य बलोद्धतः। भ्रामयामास वेगेन प्रचित्तमिव संभ्रमन् ॥

यमोऽपि कण्ठेऽवष्टभ्य दैत्यं बाहुयुगेन तु। वेगेन भ्रामयामास समुत्कृष्य महीतलात्

ततो मुष्टिभिराजघ्नतुरर्दयन्तौ परस्परम्। दैत्येन्द्रस्यातिकायत्वात्ततः श्रान्तभुजो यमः

स्कन्धे निधाय दैत्यस्य मुखं विश्रान्तिमैच्छत।

तमालक्ष्य ततो दैत्यः श्रान्तमन्तकमोजसा ॥ ४७ ॥

निष्पिपेष महीपृष्ठे बहुशः पार्ष्णिपाणिभिः। यावद्यमस्य वदनात् सुस्राव रुधिरं बहु ॥

निर्जीवितं यमं दृष्ट्वा ततः सन्त्यज्य दानवः। जयं प्राप्योद्धतं दैत्यो नादंमुक्त्वामहास्वनः

स्वयं सैन्यं समासाद्य तस्थौ गिरिरिवाचलः।

धनाधिपस्य जम्भेन सायकैर्मर्मभेदिभिः ॥ ५० ॥

दिशोऽवरुद्धाः क्रुद्धेन सैन्यं चास्य निकृन्तितम्।

ततः क्रोधपरीतस्तु धनेशो जम्भदानवम् ॥ ५१ ॥

हृदि विव्याध बाणानां सहस्रेणाग्निवर्चसाम्। सारथिश्च शतेनाजौ ध्वजं दशभिरेव च

हस्तौ च पञ्चसप्तत्या मार्गणैर्दशभिर्धनुः। मार्गणैर्बर्हिपत्राङ्कैस्तैलधौतैरजिह्मगैः ॥

पुनरेकेन तं तीक्ष्णैर्विव्याध दशभिः शरैः। जम्भस्तु कर्मतद्दृष्ट्वा धनेशस्यातिदुष्करम्

हृदि धैर्यं समालम्ब्य किञ्चित् सन्त्रस्तमानसः।

जग्राह निशितान् बाणान् शत्रुमर्मविभेदिनः ॥ ५५ ॥

आकर्णाकृष्टचापस्तु जम्भःक्रोधपरिप्लुतः। विव्याध धनदं तीक्ष्णैःशरैर्वक्षसि दानवः॥

सारथिं चास्य बाणेन दृढेनाभ्यहनद्धृदि।

चिच्छेद ज्यामथैकेन तैलधौतेन दानवः ॥ ५७ ॥

ततस्तु निशितैर्बाणैर्दारुणैर्मर्मभेदिभिः। विव्याधोरसि वित्तेशं दशभिः क्रूरकर्म्मभिः ॥

मोहं परमतो गच्छन् दृढविद्धो हि वित्तपः। स क्षणाद्धैर्यमालम्ब्य धनुराकृष्य भैरवम्

मुमोचन् बाणसहस्राणि निशितानि धनाधिपः। दिशःखंविदिशो भूमीरनीकान्यसुरस्यच

छादयामास वेगेन संच्छाद्य रविमण्डलम्। जम्भोऽपि परमेकैकं शरैर्बहुभिराहवे ॥६१॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चिच्छेद लघुसन्धानो धनेशस्यातिपौरुषात्। ततो धनेशः संक्रुद्धो दानवेन्द्रस्य
व्यधमत्तस्य सैन्यानि नानासायकवृष्टिभिः। तद्दृष्ट्वा दुष्कृतं कर्म्म धनाध्यक्षस्य
गृहीत्वा मुद्गरं भीममायसं हेमभूषितम्। धनदानुचरान्यक्षान् निष्पिपेष सहस्रशः
ते वध्यमाना दैत्येन मुञ्चन्तो भैरवान् रवान्। रथं धनपतेः सर्वे परिवार्य व्यवस्थि
दृष्ट्वा तानर्दितान् देवः शूलं जग्राह दारुणम्। तेन दैत्यसहस्राणि सूदयामास सत्व
क्षीयमाणेषु दैत्येषु दानवः क्रोधमूर्च्छितः। जग्राह परशुं दैत्यो मर्द्दनं दैत्यविद्विषाम्

स तेन सितधारेण धनभर्तुर्महारथम्।
चिच्छेद तिलशो दैत्यो ह्याखुः स्निग्धमिवाम्बरम्॥ ६८॥

पदातिरथ वित्तेशो गदामादाय भैरवीम्। महाहवविमर्देषु दृप्तशत्रुविनाशिनीम्॥६
अधृष्यां सर्वभूतानां बहुवर्षगणार्चिताम्। नानाचन्दनदिग्धाङ्गां दिव्यपुष्पविवासित
निर्मलायोमयीं गुर्वीममोघां हेमभूषणाम्। चिक्षेप मूर्ध्नि संक्रुद्धो जम्भस्य तु धनाधि

आयान्तीं तां समालोक्य तडित्सङ्घातमण्डिताम्।
दैत्यो गदाभिघातार्थं शस्त्रवृष्टिं मुमोच ह॥ ७२॥

चक्राणिकोणपः प्रासान्भुशुण्डी पट्टिशानपि। हेमकेयूरनद्धाभ्यां बाहुभ्यां चण्डवि
व्यर्थीकृत्यतुतान् सर्वानायुधान् दैत्यवक्षसि। प्रस्फुरन्तीपपातोग्रो महोल्केवाद्रिक
गदयाभिहतो गाढ़ं पपात रथकूबरे। स्रोतोभिश्चास्य रुधिरं सुस्राव गतचेतसः॥
जम्भन्तु निहतं मत्वा कुजम्भो भैरवस्वनः। धनाधिपस्य संक्रुद्धो वाक्येनातीव कोपि
चक्रे बाणमयं जालं दिक्षु यक्षाधिपस्य तु। चिच्छेद बाणजालं तदर्धचन्द्रैः शितैः
मुमोच शरवृष्टिन्तु तस्य यक्षाधिपो बली। स तं दैत्यः शरव्रातं चिच्छेद निशितैः
व्यर्थीकृतान्तु तां दृष्ट्वा शरवृष्टिं धनाधिपः। शक्तिं जग्राह दुर्द्धर्षां हेमघण्टाट्टहासिनी
बाहुना रत्नकेयूरकान्तिसन्तानहासिना। स तां निरूप्य वेगेन कुजम्भाय मुमोच ह
स कुजम्भस्य हृदयं दारयामास दारुणा। वित्तेशः स्वल्पसत्वस्य पुरुषस्यातिभा
अथास्य हृदयं भित्वा जगाम धरणीतलम्। ततो मुहूर्तादस्वस्थो दानवो दारुणा
जग्राह पट्टिशं दैत्यः प्रांशुं शितशिलीमुखम्। स तेन पट्टिशेनाजौ धनदस्य स्तनान्त

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वाक्येन तीक्ष्णरूपेण मर्मान्तरविसर्पिणा। निर्बिभेदाभिजातस्य हृदयं दुर्जनो यथा॥
तेन पट्टिशघातेन धनेशः परिमूर्च्छितः। निपपात रथोपस्थे जर्जरो धूर्वहो यथा ॥८५॥
तथागतन्तु तं दृष्ट्वा धनेशं नरवाहनम्। खड्गास्त्रो निर्ऋतिर्देवो निशाचारबलानुगः ॥८६
अभिदुद्राव वेगेन कुजम्भं भीमविक्रमम्। अथ दृष्ट्वा तु दुर्द्धर्षं कुजम्भो राक्षसेश्वरम्॥
चोदयामास सैन्यानि राक्षसेन्द्रवधं प्रति। स दृष्ट्वा चोदितां सेनां भल्लनानास्त्रभीषणाम्
रथादाप्लुत्य वेगेन भूषणद्युतिभास्वरः। खड्गेन कमलानीव विकोशेनाम्बरत्विषा॥८६
चिच्छेदरिपुवक्त्राणिविचित्राणि समन्ततः। तिर्यक् पृष्ठमधश्चोर्द्ध्वं दीर्घबाहुर्महासिना
सन्दष्टौष्ठपुटाटोप भ्रूकुटीविकटाननः। प्रचण्डकोपरक्ताक्षो न्यकृन्तद्दानवान् रणे ॥६१॥

ततो निःशेषितप्रायां विलोक्य स्वामनीकिनीम्।
मुक्त्वा कुजम्भो धनदं राक्षसेन्द्रमभिद्रवत्॥ ६२॥

लब्धसंज्ञोऽथ जम्भस्तु धनाध्यक्षपदानुगान्। जीवग्राहान् स जग्राह बध्वापाशैःसहस्रशः
मूर्तिमन्ति तु रत्नानि विविधानि च दानवाः। वाहनानिच दिव्यानि विमानानिसहस्रशः

धनेशो लब्धसंज्ञोऽथ तामवस्थां विलोक्य तु।
निश्वसन् दीर्घमुष्णञ्च रोषात् ताम्रविलोचनः॥ ६५॥

ध्यात्वास्त्रं गारुडन्दिव्यंबाणं सन्धाय कार्मुके। मुमोचदानवानीके तं बाणं शत्रुदारणम्
प्रथमङ्कार्मकात्तस्य निश्चेरुर्धूमराजयः। अनन्तरं स्फुलिङ्गानां कोटयो दीप्तवर्चसाम्॥
ततो ज्वालाकुलं व्योम चकारास्त्रं समन्ततः। ततःक्रमेण दुर्वारं नानारूपं तदाभवत्॥
अमूर्तश्चाभवल्लोको ह्यन्धकारसमावृतः। ततोऽन्तरिक्षे शंसन्ति तेजस्तेतु परिष्कृतम्॥
कुजम्भस्तत्समालोच्य दानवोऽतिपराक्रमः। अभिदुद्राव वेगेन पदातिर्धनदं नदन्॥
तथाभिमुखमायान्तं दैत्यं दृष्ट्वा धनाधिपः। बभूव संभ्रमाविष्टः पलायनपरायणः।१०१।
ततः पलायतस्तस्य मुकुटं रत्नमण्डितम्। पपात भूतले दीप्तं रविबिम्बमिवाम्बरात्॥
शूराणामभिजातानां भर्तर्यपसृते रणात्। भर्तुः संग्रामशिरसि युक्तन्तद्भूषणाग्रतः॥
इति व्यवस्य दुर्धर्षा नानाशस्त्रास्त्रपाणयः। युयुत्सवः स्थिता यक्षामुकुटं परिवार्य तम्
अभिमानधना वीरा धनदस्य पदानुगाः। तानमर्षाच्च संप्रेक्ष्य दानवाश्चण्डपौरुषाः॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भू (भु) शुण्डीं भैरवाकारां गृहीत्वा शैलगौरवाम् ।
रक्षिणो मुकुटस्याथ निष्पिपेष निशाचरान् ॥ १०६ ॥

तान् प्रमथ्याथ दनुजो मुकुटन्तत् स्वके रथे । समारोप्यामररिपुर्जित्वा धनदमाहवे ।

धनानि रत्नानि च मूर्तिमन्ति तथा निधानानि शरीरिणश्च ।
आदाय सर्वाणि जगाम दैत्यो जम्भः स्वसैन्यन्दनुजेन्द्रसिंहः ।
धनाधिपो वै विनिकीर्णमूर्धजो जगाम दीनः सुरभर्तुरन्तिकम् ॥१०८॥

कुजम्भेनाथ संसक्तो रजनीचरनन्दनः । मायाममोघामाश्रित्य तामसीं राक्षसेश्वरः ।
मोहयामास दैत्येन्द्रं जगत् कृत्वा तमोमयम् । ततो विफलनेत्राणि दानवानां बलानि तु ।
नशेकुश्चलितुन्तत्र पदादपि पदन्तदा । ततो नानास्त्रवर्षेण दानवानां महाचमूम् ॥११
जघान घननोहारतिमिरातुरवाहनाम् । वध्यमानेषु दैत्येषु कुजम्भे मूढचेतसि ॥ ११२

महिषो दानवेन्द्रस्तु कल्पान्ताम्भोदसन्निभः ।
अस्त्रञ्चकार सावित्रमुल्कासङ्घातमण्डितम् ॥ ११३ ॥

विजृम्भत्यथ सावित्रे परमास्त्रे प्रतापिनि । प्रणाशमगमत्तीव्रं तमो घोरमनन्तरम् ॥११
ततोऽस्त्रं विस्फुलिङ्गाङ्कं तमः कृत्स्नं व्यनाशयत् । प्रफुल्लारुणपद्माभं शरदीवामलं स
ततस्तमसि संभ्रान्ता दैत्येन्द्राः प्राप्तचक्षुषः । चक्रुः क्रूरेण मनसा देवानीकैः सहाद्भुतम्
शस्त्रैरमर्षान्निर्मुक्तैर्भुजङ्गास्त्रं विनोदितम् । अथादाय धनुर्घोरमिषूंश्चाशीविषोपमान्
कुजम्भोऽधावत क्षिप्रं रक्षोराजबलम्प्रति । राक्षसेन्द्रस्तमायान्तं विलोक्य स पदानु
विव्याध निशितैर्बाणैः क्रूराशीविषभीषणैः । तदादानञ्च सन्धानं न मोक्षश्चापि लक्ष्य
चिच्छेदास्य शरव्रातान् स्वशरैरतिलाघवात् । ध्वजं परमतीक्ष्णेन चित्रकर्मामरद्विषः
सारथिश्चास्य भल्लेन रथनीडादपातयात् । कुजम्भः कर्मतद् दृष्ट्वा राक्षसेन्द्रस्य संयु
रोषरक्तेक्षणयुतो रथादाप्लुत्य दानवः । खड्गं जग्राह वेगेन शरदम्बरनिर्मलम् ॥ १२२
चर्म चोदयखण्डेन्दुदशकेन विभूषितम् । अभ्यद्रवद्रणे दैत्यो रक्षोऽधिपतिमोजसा
तं रक्षोऽधिपतिः प्राप्तं मुद्गरेणाहनद्धृदि । स तु तेन प्रहारेण क्षीणः संभ्रान्तमानसः
तस्थावचेष्टो दनुजो यथा धीरो धराधरः । समुहूर्तं समाश्वस्तो दानवेन्द्रोऽतिदुर्जयः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रथमारुह्य जग्राह रक्षो वामकरेण तु । केशेषु निर्ऋतिं दैत्यो जानुनाक्रम्यधिष्ठितम् ॥
ततः खड्गेन च शिरश्छेत्तुमैच्छदमर्षणः । तस्मिन् तदन्तरे देवो वरुणोऽपांपतिर्द्रुतम् ॥
पाशेन दानवेन्द्रस्य बबन्ध च भुजद्वयम् । ततो बद्धभुजं दैत्यं विफलीकृतपौरुषम् ॥
ताडयामास गदया दयामुत्सृज्य पाशधृक् । स तु तेन प्रहारेण स्रोतोभिःक्षतजं वमन्
दधार रूपं मेघस्य विद्युन्मालालतावृतम् । तदवस्थागतं दृष्ट्वा कुजम्भं महिषासुरः ॥१३०
व्यावृत्तवदने गाधे ग्रस्तुमैच्छत् सुरावुभौ । निर्ऋतिं वरुणश्चैव तीक्ष्णदंष्ट्रोत्कटाननः
तावभिप्रायमालक्ष्य तस्य दैत्यस्य दूषितम् । त्यक्त्वारथपथं भीतौ महिषस्यातिरंहसा

भृशं द्रुतौ जवाद्दिग्भ्यामुभाभ्यां भयविह्वलौ ।
जगाम निर्ऋतिः क्षिप्रं शरणं पाकशासनम् ॥१३३॥

क्रुद्धस्तु महिषो दैत्यो वरुणं समभिद्रुतः । तमन्तकमुखासक्तमालोक्य हिमवद्द्युतिः ॥

चक्रे सोमास्त्रनिसृष्टं हिमसङ्घातकण्टकम् ।
वायव्यं चास्त्रमतुलं चन्द्रश्चक्रे द्वितीयकम् ॥१३५॥
वायुना तेन चन्द्रेण संशुष्केण हिमेन च ।
व्यथिता दानवाः सर्वे शीतोच्छिन्ना विपौरुषाः ॥१३६॥

न शेकुश्चलितुं पद्भ्यां नास्त्राण्यादातुमेव च । महाहिमनिपातेन शस्त्रैश्चन्द्रप्रचोदितैः॥
गात्राण्यसुरसैन्यानामदह्यन्त समन्ततः । महिषो निष्प्रयत्नस्तु शीतेनाकम्पिताननः ॥
वक्षोवालम्भ्य पाणिभ्यामुपविष्टो ह्यधोमुखः । सर्वे ते निष्प्रतीकारा दैत्याश्चन्द्रमसा जिताः
रणेच्छां दूरतस्त्यक्त्वा तस्थुस्ते जीवितार्थिनः । तत्राब्रवीत्कालनेमिर्दैत्यान्कोपेन दीपितः

भो भोः शृङ्गारिणः शूराः ! सर्वे ! शस्त्रास्त्रपारगाः ।
एकैकोऽपि जगत्सर्वं शक्तस्तुलयितुं भुजैः ॥१४१॥

एकैकोऽपि क्षमो ग्रस्तुं जगत्सर्वं चराचरम् । एकैकस्यापि पर्याप्तानसर्वेऽपिदिवौकसः
कलां पूरयितुं यत्नात् षोडशीमतिविक्रमाः । किं प्रयाताश्च तिष्ठध्वं समरेऽमरनिर्जिताः
न युक्तमेतच्छूराणांविशेषाद्दैत्यजन्मनाम् । राजाचान्तरितोऽस्माकंतारको लोकमारकः
विरतानां रणादस्मात् क्रुद्धः प्राणान् हरिष्यति । शीतेन नष्टश्रुतयोभ्रष्टवाक्पाटवास्तथा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मूकास्तदाभवन् दैत्या रणद्दशनपङ्क्तयः ।
तान् दृष्ट्वा नष्टचेतस्कान् दैत्यान् शीतेन सादितान् ॥१४६॥
मत्वा कालक्षमं कार्यं कालनेमिर्महासुरः । आश्रित्य दानवीं मायां वितत्य स्वं महावपुः
पूरयामास गगनं दिशो विदिश एव च । निर्ममे दानवेन्द्रेशः शरीरे भास्करायुतम् ।
दिशश्च मायया चण्डैःपूरयामास पावकैः । ततोज्वालाकुलं सर्वं त्रैलोक्यमभवत्क्षणा
तेन ज्वालासमूहेन हिमांशुरगमच्छमम् । ततः क्रमेण विभ्रष्टशीतदुर्दिनमावभौ ॥१५
तद्बलं दानवेन्द्राणां मायया कालनेमिनः । तद्दृष्ट्वा दानवानीकं लब्धसंज्ञं दिवाकरः
उवाचारुणमुद्भ्रान्तकोपाल्लोकैकलोचनः ।

दिवाकर उवाच ।

नयारुणरथं शीघ्रं कालनेमिरथोयतः ॥१५२॥
विमर्दस्तत्र विषमो भविता शूरसंक्षयः । एषोऽजितः शशाङ्कोऽत्र तद्बलं बलमाश्रितः
इत्युक्तश्चोदयामास रथं गरुडपूर्वजः । प्रयत्नविधृतैरश्वैः सितचामरमालिभिः ॥१५
जगद्दीपोऽथ भगवान् जग्राह विततं धनुः ।
शरौ च द्वौ महाभागो दिव्यावाशीविषद्युती ॥१५५॥
सञ्चारास्त्रेण सन्धाय बाणमेकं ससर्ज सः । द्वितीयमिन्द्रजालेन योजितं प्रमुमोच
सञ्चारास्त्रेण रूपाणां क्षणाच्चक्रे विपर्ययम् । देवानां दानवं रूपं दानवानाञ्च दैविकम्
मत्वा सुरान् स्वकानेव जघ्ने घोरास्त्रलाघवात् ।
कालनेमीरुषाविष्टः कृतान्त इव संक्षये ॥१५८॥
कांश्चित् खड्गेन तीक्ष्णेन कांश्चिन्नाराचवृष्टिभिः ।
कांश्चिद् गदाभिर्घोराभिः कांश्चिद् घोरैः परश्वधैः ॥१५६॥
शिरांसि केषांचिदपातयच्च भुजान् रथान् सारथींश्चोग्रवेगः ।
कांश्चित् पिपेषाथ रथस्य वेगात् कांश्चित् क्रुधा चोद्धतमुष्टिपातैः ॥१६०
रणे विनिहतान् दृष्ट्वा नेमिः स्वान् दानवाधिपः ।
रूपं स्वनं प्रपद्यन्त ह्यसुराः सुरधर्षिताः ॥१६१॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कालनेमी रुषाविष्टस्तेषां रूपं न बुद्धवान्। नेमिर्दैत्यस्तु तान् दृष्ट्वा कालनेमिमुवाच ह

अहं नेमिः सुरो नैव कालनेमे! विदस्व माम्।

भवता मोहितेनाजौ निहता भूरिविक्रमाः ॥१६३॥

दैत्यानां दशलक्षाणि दुर्जयानां सुरैरिह। सर्वास्त्रवारणं मुञ्च ब्राह्ममस्त्रं त्वरान्वितः॥

स तेन बोधितो दैत्यः सम्भ्रमाकुलचेतनः। योजयामास बाणं हि ब्रह्मास्त्रविहितेन तु

मुमोच चापि दैत्येन्द्रः सस्वयंसुरकण्टकः। ततोऽस्त्रतेजसाव्याप्तंत्रैलोक्यंसचराचरम्

देवानां चाभवत् सैन्यं सर्वमेव भयान्वितम्। सञ्चरास्त्रञ्च संशान्तं स्वयमायोधने बभौ

तस्मिन् प्रतिहते ह्यस्त्रे भ्रष्टतेजा दिवाकरः। महेन्द्रजालमाश्रित्यचक्रेस्वां कोटिशस्तनुम्

विस्फूर्जत्करसम्पातसमाक्रान्तजगत्त्रयम्। तताप दानवानीकं गतमज्जौघशोणितम्॥

...श्चावर्षदनलं समन्त(न्ता)दतिसंहतम्। चक्षूंषि दानवेन्द्राणां चकारान्धानि च प्रभुः

...नानामगलन्मेदः पेतुश्चाप्यरवा भुवि। तुरगा निश्वसन्तश्च घर्मार्त्ता रथिनोऽपि च॥

...श्चेतश्च सलिलं प्रार्थयन्तस्तृषातुराः। प्रच्छायविटपांश्चैव गिरीणां गह्वराणि च॥

...वाग्निः प्रज्वलंश्चैव घोरार्चिर्दग्धपादपः। तोयार्थिनःपुरो दृष्ट्वा तोयं कल्लोलमालितम्

...स्थितमपि प्राप्तुं न शुकेरवमर्दिताः। अप्राप्य सलिलं भूमौ व्यात्तास्यागतचेतसः॥

...तत्र व्यदृश्यन्त मृता दैत्येश्वरा भुवि। रथे गजाश्च पतितास्तुरगाश्च समापिताः॥

...स्थिता वमन्तो धावन्तो गलद्रक्तवसासृजः। दानवानां सहस्राणि व्यदृश्यन्त मृतानितु

...सङ्क्षये दानवेन्द्राणां तस्मिन्महति वर्तिते। प्रकोपोद्धूतताम्राक्षः कालनेमीरुषातुरः॥

...भवत्कल्पमेघाभः स्फुरद्भूरिशतह्रदः। गम्भीरास्फोटनिह्रादजगद्धृदयघट्टकः॥१७८॥

प्रच्छाद्य गगनाभोगं रविमायां व्यनाशयत्।

शीतं ववर्ष सलिलं दानवेन्द्रबलं प्रति ॥१७९॥

दैत्यास्तां वृष्टिमासाद्य समाश्वस्तास्ततः क्रमात्।

वीजाङ्कुरा इवाम्लानाः प्राप्य वृष्टिं धरातले ॥१८०॥

...तः स मेघरूपी तु कालनेमिर्महासुरः। शस्त्रवृष्टिं ववर्षोग्रां देवानीकेषु दुर्जयः ॥१८१

तया वृष्ट्या बाध्यमाना दैत्येन्द्राणां महौजसाम्।

CCO. Vasishtha Tripathi Collection: Digitized by eGangotri

गतिं काञ्चन पश्यन्तो गावः शीतार्दिता इव ॥१८८॥

परस्परं व्यलीयन्त पृष्ठेषु व्यस्त्रपाणयः। स्वेषु बाधे व्यलीयन्त गजेषु तुरगेषु च
रथेषु त्वमरास्त्रस्तास्तत्र तत्र निलिल्यिरे। अपरे कुञ्चितैर्गात्रैः स्वहस्तपिहिता
इतश्चेतश्च सम्भ्रान्ता बभ्रमुर्वै दिशोदश। एवं विधेतु संग्रामे तु मुले देवसंक्षये॥
दृश्यन्ते पतिता भूमौ शस्त्रभिन्नाङ्गसन्धयः। विभुजा भिन्नमूर्धानस्तथाच्छिन्नोरुजा
विपर्य्यस्तरथाः सङ्गा निष्पिष्टध्वजपंक्तयः। निर्भिन्नाङ्गैस्तुरङ्गैस्तु गजैश्चाचलसन्नि
श्रुतरक्तहृदैर्भूमिर्विकृताऽविकृता बभौ। एवमाजौ बली दैत्यः कालनेमिर्महासुरः॥
जघ्ने मुहूर्तमात्रेण गन्धर्वाणां दशायुतम्। यक्षाणां पञ्चलक्षाणि रक्षसामयुतानि

त्रीणि लक्षाणि जघ्ने स किन्नराणां तरस्विनाम्।
जघ्ने पिशाचमुख्यानां सप्तलक्षाणि निर्भयः ॥१९०॥
इतरेषामसंख्याताः सुरजातिनिकायिनाम्।
जघ्ने स कोटीः संक्रुद्धश्चित्रास्त्रैरस्त्रकोविदः ॥१९१ ॥

एवं परिभवे भीमे तदा त्वमरसङ्क्षये। संक्रुद्धावश्विनौ चित्रास्त्रकवचोज्वलौ॥१९
जघ्नतुः समरे दैत्यं कृतान्तानलसन्निभम्। तमासाद्य रणे घोरमेकैकः षष्टिभिः
जघ्ने मर्मसु तीक्ष्णाग्रैरसुरम्भीमदर्शनम्। ताभ्यां बाणप्रहारैः स किञ्चिदायस्तचेतन
जग्राह चक्रमष्टारन्तैलधौतं रणान्तकम्। तेन चक्रेण सोऽश्विभ्याश्चिच्छेद रथकूबर
जग्राहाथ धनुर्दैत्यःशरांश्चाशीविषोपमान्। ववर्ष भिषजोर्मूर्द्धिनसंच्छाद्याकाशगोच
तावप्यस्त्रैश्चिच्छिदतुःशितैस्तैर्दैत्यसायकान्। तच्चकर्मतयोर्दृष्ट्वाविस्मितःकोपमावि
महता स तु कोपेन सर्वायोमयसादनम्। जग्राह मुद्गरम्भीमं कालदण्डविभीषणम्
स ततो भ्राम्य वेगेन चिक्षेपाश्विरथं प्रति। तन्तु मुद्गरमायान्तमालोक्याम्बरगोचरौ

त्यक्त्वा रथौ तु तौ वेगादाप्लुतौ तरसाश्विनौ।
तौ रथौ स तु निष्पिष्य मुद्गरोऽचलसन्निभः॥ २०० ॥

दारयामास धरणीं हेमजालपरिष्कृतः। तस्य कर्माश्विनौ दृष्ट्वा भिषजौ चित्रयोधि
वज्रास्त्रन्तु प्रकुर्वाते दानवेन्द्रनिवारणम्। ततो वज्रमयं वर्षम्प्रावर्तददतिदारुणम्॥२

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ोवज्रप्रहारैस्तु दैत्येन्द्रः स परिष्कृतः। रथो ध्वजो धनुश्चक्रं कवचं चापि काञ्चनम्
ेन तिलशो जातंसर्वसैन्यस्य पश्यतः। तद्दृष्ट्वा दुष्करं कर्मसोऽश्विभ्यांभीमविक्रमः
ारायणास्त्रं बलवान् मुमोच रणमूर्द्धनि। वज्रास्त्रं शमयामास दानवेन्द्रोऽस्त्रतेजसा

तस्मिन् प्रशान्ते वज्रास्त्रे कालनेमिरनन्तरम्।
जीवग्राहं ग्राहयितुमश्विनौ तु प्रचक्रमे ॥ २०६ ॥

ावश्विनौ रणाद्भीतौ सहस्राक्षरथं प्रति। प्रयातौ वेपमानौ तु यदा शस्त्रविवर्जितौ ॥
ोरनुगतो दैत्यः कालनेमिर्महाबलः। प्राप्येन्द्रस्य रथं क्रूरो दैत्यानीकपदानुगः ॥
दृष्ट्वा सर्वभूतानि वित्रेसुर्विह्वलानि तु। दृष्ट्वा दैत्यस्य तत्क्रौर्यं सर्वभूतानि मेनिरे ॥
राजयं महेन्द्रस्य सर्वलोकक्षयावहम्। चेलुःशिखरिणो मुख्याः पेतुरुल्का नभस्तलात्
गर्जुर्जलदा दिक्षु ह्युद्भूताश्च महार्णवाः। तां भूतविकृतिं दृष्ट्वा भगवान् गरुड़ध्वजः ॥
बुध्यता हि पर्यङ्के योगनिद्रां विहाय तु। लक्ष्मीकरयुगाजस्रलालिताङ्घ्रिसरोरुहः ॥
दम्बरनीलाब्जकान्तदेहच्छविर्विभुः। कौस्तुभोद्भासितोरस्को कान्तकेयूरभास्करः।
मृश्य सुरसंक्षोभं वैनतेयं समाह्वयत्। आहूतेऽवस्थिते तस्मिन्नागावस्थितवर्ष्मणि ॥

दिव्यनानास्त्रतीक्ष्णार्चिरारुह्यागात् सुरान् स्वयम्।
तत्रापश्यत देवेन्द्रमभिद्रुतमभिप्लुतैः ॥ २१५ ॥

नवेन्द्रैर्नवाम्भोदसच्छायैः पौरुषोत्कटैः। प्रयात्वा पुरुषैर्घोरैरभाग्यैर्धनशालिभिः ॥
रित्राणायाशुकृतं सुक्षेत्रे कर्म्म निर्मलम्। अथापश्यन्त दैतेयावियति ज्योतिमण्डलम्
ुरन्तमुदयाद्रिस्थं सूर्यमुष्णत्विषा इव। प्रभावं ज्ञातुमिच्छन्तो दानवास्तस्यतेजसः
न्तमपश्यन्त कल्पान्तानलसन्निभम्। तमास्थितश्च मेघौघद्युतिमक्षयमच्युतम् ॥
ालोक्यासुरेन्द्रास्तु हर्षसम्पूर्णमानसाः। अयंवैदेव! सर्वस्वञ्जितेऽस्मिन्निर्जिताःसुराः

अयं स दैत्यचक्राणां कृतान्तः केशवोऽरिहा।
एनमाश्रित्य लोकेषु यज्ञभागभुजोऽमराः ॥ २२१ ॥

ुक्त्वा दानवाः सर्वे परिवार्य समन्ततः। निजघ्नुर्विविधैरस्त्रैस्ते तमायान्तमाहवे ॥
ालनेमिप्रभृतयो दशदैत्या महारथाः। षष्ट्या विव्याध बाणानां कालनेमिर्जनार्दनम्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

निमिः शतेन बाणानां मथनोऽशीतिभिःशरैः । जम्भकश्चैव सप्तत्या शुम्भो दशभि
शेषा दैत्येश्वराः सर्वे विष्णुमेकैकशः शरैः । दशभिश्चैव यत्तास्ते जघ्नुः सगरुड़ं
तेषाममृष्य तत् कर्म्म विष्णुर्दानवसूदनः । एकैकं दानवं जघ्ने षड्भिः षड्भिरजि
आकर्णकृष्टैर्भूयश्च कालनेमिस्त्रिभिःशरैः । विष्णुं विव्याध हृदये क्रोधाद्रक्तविलो
तस्याशोभन्त ते बाणाहृदये तप्तकाञ्चनाः। मयूखानीव दीप्तानि कौस्तुभस्यस्फुर
तैर्बाणैः किञ्चिदायस्तो हरिर्जग्राह मुद्गरम् । सततं भ्राम्य वेगेन दानवाय व्यसृ
दानवेन्द्रस्तमप्राप्तं वियत्येव शितैः शरैः । चिच्छेद तिलशःक्रुद्धो दर्शयन् पाणिला
ततो विष्णुः प्रकुपितः प्रासञ्जग्राह भैरवम् । तेन दैत्यस्य हृदयं ताड़यामास गा
क्षणेन लब्धसंज्ञस्तु कालनेमिर्महासुरः । शक्तिञ्जग्राह तीक्ष्णाग्रां हेमघण्टाट्टहासि

तया वामभुजं विष्णोर्बिभेद दितिनन्दनः ।
भिन्नः शक्त्या भुजस्तस्य स्नुतशोणित आबभौ ॥ २३३ ॥

पद्मरागमयेनेव केयूरेण विभूषितः । ततो विष्णुः प्रकुपितो जग्राह विपुलन्धनुः ॥
सप्तदशचनाराचांस्तीक्ष्णान् मर्मविभेदिनः । दैत्यस्य हृदयं षड्भिर्विव्याधचत्रिभि
चतुर्भिः सारथिञ्चास्यध्वजञ्चैकेनपत्रिणा । द्वाभ्यांज्याधनुषीचापि भुजंसव्यञ्चप
स विद्धो हृदये गाढ़ं दैत्यो हरिशिलीमुखैः । स्नुतरक्तारुणप्रांशुः पीड़ाकुलितमान
चकम्पे मारुतेनेव नोदितः किंशुकद्रुमः । तमाकम्पितमालक्ष्य गदां जग्राह केशव
ताञ्च वेगेन चिक्षेप कालनेमिरथं प्रति । सा पपात शिरस्युग्रा विपुला कालनेमिन
सञ्चूर्णितोत्तमाङ्गस्तु निष्पिष्टमुकुटोऽसुरः । स्नुतरक्तौघरन्ध्रस्तु स्नुतधातुरिवाच
प्रापतत्स्वे रथेभग्ने विसंज्ञः शिष्टजीवितः । पतितस्य रथोपस्थे दानवस्याच्युतोऽ
स्मितपूर्वमुवाचेदं वाक्यं चक्रायुधःप्रभुः। गच्छासुर! विमुक्तोऽसि साम्प्रतंजीवनि
ततः स्वल्पेन कालेन अहमेव तवान्तकः । एतच्छ्रुत्वा वचस्तस्य सारथिः कालनेमि

अपवाह्य रथं दूरमनयत् कालनेमिनः ॥ २४३ ॥

इति श्रीमत्स्यपुराणे देवासुरसंग्रामे कालनेमिपराजयो नामैकोनपञ्चाशद-
धिकशततमोऽध्यायः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# पञ्चाशदधिकशततमोऽध्यायः

## तारकासुरोपाख्याने देवासुरयुद्धे ग्रसनवधवर्णनम् ।

सूत उवाच ।

...दृष्ट्वा दानवाः क्रुद्धाश्चेरुः स्वैस्स्वैर्बलैर्वृताः । सरघा इव माक्षीकहरणे सर्वतो दिशम्
...चामरजालाढ्ये सुधाविरचिताङ्कुरे । चित्रपञ्चपताके तु प्रभिन्नकरटामुखे ॥ २ ॥
...र्वताभे गजे भीमे मदस्राविणि दुर्द्धरे । आरुह्याजौ निमिर्दैत्यो हरिं प्रत्युद्ययौ बली ॥
...स्यासन् दानवा रौद्रा गजस्य पदरक्षिणः । सप्तविंशतिसाहस्राः किरीटकवचोज्वलाः
...वारूढश्च मथनो जम्भकश्चोष्ट्रवाहनः । शुम्भोऽपि विपुलं मेषं समारुह्याव्रजद्रणम् ॥
...परे दानवेन्द्रास्तु यत्तानानास्त्रपाणयः । आजघ्नुः समरे क्रुद्धा विष्णुमक्लिष्टकारिणम्
...परिघेण निमिर्दैत्यो मथनो मुद्गरेण तु । शुम्भः शूलेन तीक्ष्णेन प्रासेन ग्रसनस्तथा ॥

चक्रेण महिषः क्रुद्धो जम्भः शक्त्या महारणे ।
जघ्नुर्नारायणं सर्वे शेषास्तीक्ष्णैश्च मार्गणैः ॥ ८ ॥

...न्यस्त्राणि प्रयुक्तानि शरीरं विविशुर्हरेः । गुरूक्तानुपदिष्टान्वै सच्छिष्यस्य श्रुतानिव
...सम्भ्रान्तोरणे विष्णुरथ जग्राह कार्मुकम् । शरांश्चाशीविषाकारांस्तैलधौतानजिह्मगान्
...तोऽभिसन्धय दैत्यांस्तानाकर्णाकृष्टकार्मुकः । अभ्यद्रवद्रणे क्रुद्धो दैत्यानीकेतुपौरुषान्
निमिं विव्याध विंशत्या बाणानामग्निवर्चसाम् । मथनं दशभिर्बाणैः शुम्भं पञ्चभिरेवच

एकेन महिषं क्रुद्धो विव्याधोरसि पत्रिणा ।
जम्भं द्वादशभिस्तीक्ष्णैः सर्वांश्चैकैकशोऽष्टभिः ॥ १३ ॥

...स्य तल्लाघवं दृष्ट्वा दानवाः क्रोधमूर्च्छिताः । नर्दमानाः प्रयत्नेन चक्रुरत्यद्भुतं रणम् ॥
चिच्छेदाथ धनुर्विष्णोर्निमिर्भल्लेन दानवः । सन्धयमानं शरं हस्ते चिच्छेद महिषासुरः
...डयामास गरुडं जम्भस्तीक्ष्णैस्तु सायकैः । भुजं तस्याहनद्गाढं शुम्भोभूधरसन्निभः
छिन्ने धनुषि गोविन्दो गदां जग्राह भीषणाम् । तां प्राहिणोत्स वेगेन मथनायमहाहवे

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तामप्राप्तां निमिर्वाणैश्चिच्छेद तिलशो रणे। तां नाशमागतां दृष्ट्वा हीनाग्रे प्रार्थनाि
जग्राह मुद्गरं घोरं दिव्यरत्नपरिष्कृतम्। तं मुमोचाथ वेगेन निमिमुद्दिश्य दानव
तमायान्तं वियत्येव त्रयो दैत्या न्यवारयन्। गदया जम्भदैत्यस्तु ग्रसनः पट्टिशे
शक्त्या च महिषो दैत्यः स्वपक्षजयकाङ्क्षया। निराकृतं तमालोक्य दुर्जने प्रणयं
जग्राह शक्तिमुग्राग्रामष्टघण्टोत्कटस्वनाम्। जम्भाय तां समुद्दिश्य प्राहिणोद्रणभ

तामम्बरस्थां जग्राह गजो दानवनन्दनः।
गृहीतां तां समालोक्य शिक्षामिव विवेकिभिः ॥ २३ ॥

दृढं भारसहं सारमन्यदादाय कार्मुकम्। रौद्रास्त्तमभिसन्धाय तस्मिन् वाणं मुमोच
ततोऽस्त्रतेजसा सर्वं व्याप्तं लोकं चराचरम्। ततो वाणमयं सर्वमाकाशं समदृश्य
भूर्दिशो विदिशश्चैव वाणजालमया बभुः। दृष्ट्वा तदस्त्रमाहात्म्यं सेनानीर्ग्रसनोऽ
ब्राह्ममस्त्रञ्चचारासौ सर्वास्त्रं विनिवारणम्। तेन तत्प्रशमंयातं रौद्रास्त्रं लोकघस्म
अस्त्रे प्रतिहते तस्मिन् विष्णुर्दानवसूदनः। कालदण्डास्त्रमकरोत् सर्वलोकभयङ्क
सन्धीयमाने तस्मिंस्तु मारुतःपरुषोववौ। चकम्पे च मही देवी दैत्याभिन्नधियोऽ
तदस्त्रमुग्रं दृष्ट्वा तु दानवा युद्धदुर्मदाः। चक्रुरस्त्राणि दिव्यानि नानारूपाणि संयु

नारायणास्त्रं ग्रसनो गृहीत्वा चक्रं निमिः स्वास्त्रवरं मुमोच।
एकैकमस्त्रञ्च चकार जम्भस्तत्कालदण्डास्त्रनिवारणाय ॥३१॥
यावन्न सन्धानदशां प्रयान्ति दैत्येश्वराश्चास्त्रनिवारणाय।
तावत् क्षणेनैव जघान कोटीर्दैत्येश्वराणां सगजान् सहाश्वान् ॥३२॥
अनन्तरं शान्तमभूत्तदस्त्रं दैत्यास्त्रयोगेन तु कालदण्डम्।
शान्तं तदालोक्य हरिः स्वशस्त्रं स्वविक्रमे मन्युपरीतमूर्तिः ॥३३॥
जग्राह चक्रं तपनायुताभमुग्रारमात्मानमिव द्वितीयम्।
चिक्षेप सेनापतयेऽभिसन्ध्य कण्ठस्थलं वज्रकठोरमुग्रम् ॥३४॥
चक्रं तदाकाशगतं विलोक्य सर्वात्मना दैत्यवराः स्ववीर्य्यैः।
नाशक्नुवन् वारयितुं प्रचण्डं दैवं यथा कर्म्म मुधा प्रपन्नम् ॥३५॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तमप्रतर्क्यं जनयन्नजय्यं चक्रं पपात ग्रसनस्य कण्ठे।
द्विधा तु कृत्वा ग्रसनस्य कण्ठं तद्रक्तधारारुणघोरनाभिः।
जगाम भूयोऽपि जनार्दनस्य पाणिं प्रवृद्धानलतुल्यदीप्ति ॥३६॥

इति श्रीमत्स्यपुराणे देवासुरसंग्रामे ग्रसनवधोनाम पञ्चाशदधिकशततमोऽध्यायः।

---

# एकपञ्चाशदधिकशततमोऽध्यायः

## तारकासुरोपाख्याने देवासुरयुद्धवर्णनम्।

सूत उवाच।

तस्मिन् विनिहते दैत्ये ग्रसने लोकनायके। निर्मर्यादमयुध्यन्त हरिणा सह दानवाः ॥
पट्टिशैर्मुशलैः पाशैर्गदाभिः कुशलैरपि। तीक्ष्णाननैश्च नाराचैश्चक्रैः शक्तिभिरेव च ॥२
तानस्त्रान् दानवैर्मुक्तान् चित्रयोधी जनार्दनः। एकैकं शतशश्चक्रे वाणैरग्निद्विजोपमैः
ततः क्षीणायुधप्राया दानवा भ्रान्तचेतसः। अस्त्राण्यादातुमभवन्न समर्था यदा रणे
तदा मृतैर्गजैरश्वैर्जनार्दनमयोधयन्। समन्तात् कोटिशो दैत्याःसर्वतः प्रत्ययोधयन्
बहु कृत्वा वपुर्विष्णुः किञ्चिच्छ्रान्तभुजोऽभवत्। उवाचचगरुत्मन्तं तस्मिन्सुतुमुलेरणे

गरुत्मन्! कच्चिदश्रान्तस्त्वमस्मिन्नपि साम्प्रतम्।
यद्यश्रान्तोऽसि तद्याहि मथनस्य रथम्प्रति ॥ ७ ॥

श्रान्तोऽस्यथ मुहूर्तन्त्वं रणादपसृतोभव। इत्युक्तो गरुडस्तेन विष्णुना प्रभविष्णुना ॥
आससाद रणे दैत्यं मथनं घोरदर्शनम्। दैत्यस्त्वभिमुखं दृष्ट्वा शङ्खचक्रगदाधरम् ॥९॥

जघान भिन्दिपालेन शितवाणेन वक्षसि।
तत् प्रहारमचिन्त्यैव विष्णुस्तस्मिन् महाहवे ॥ १० ॥

जघान पञ्चभिर्वाणैर्मार्जितैश्च शिलाशितैः। पुनर्दशभिराकृष्टैस्तत्रताड स्तनान्तरे ॥११॥
विद्धो मर्मसु दैत्येन्द्रो हरिबाणैरकम्पत। स मुहूर्तं समाश्वास्य जग्राह परिघन्तदा ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जघ्ने जनार्दने चापि परिघेणाग्निवर्चसा । विष्णुस्तेन प्रहारेण किञ्चिदाघूर्णितोऽ
ततः क्रोधविवृत्ताक्षो गदाञ्जग्राह माधवः । मथनं सरथं रोषान्निष्पिपेषाथ रौ
स पपाताथ दैत्येन्द्रः क्षयकालेऽचलो यथा । यस्मिन्निपतिते भूमौ दानवे वीर्यशा
अवसादं ययुर्दैत्याः कर्दमे करिणो यथा । ततस्तेषु विपन्नेषु दानवेष्वतिमानिषु ।
कोपरक्ततया नाम महिषो दानवेश्वरः । प्रत्युद्ययौ हरिं रौद्रः स्वबाहुबलमास्थि
तीक्ष्णधारेण शूलेन महिषो हरिमर्दयन् । शक्त्या च गरुडं वीरो महिषोऽभ्यहनद्
ततो व्यावृत्तवदनं महाचलगुहानिभम् । यस्तु मैच्छद्रणे दैत्यः स गरुत्मन्तमच्यु

अथाच्युतोऽपि विज्ञाय दानवस्य चिकीर्षितम् ।
वदनं पूरयामास दिव्यैरस्त्रैर्महाबलः ॥ २० ॥

महिषस्याथ ससृजे बाणौघं गरुडध्वजः । पिधाय वदनं दिव्यैर्दिव्यास्त्रपरिमन्त्रि
स तैर्बाणैरभिहतो महिषोऽचलसन्निभः । परिवर्तितकायोऽधः पपात न ममार
महिषं पतितं दृष्ट्वा भूमौ प्रोवाच केशवः । महिषासुर ! मत्तस्त्वं वधन्नास्त्रैरिहार्हसि

योषिद्वध्यः पुरोक्तोऽसि साक्षात् कमलयोनिना
उत्तिष्ठ जीवितं रक्ष गच्छास्मात् सङ्गराद्द्रुतम् ॥ २४ ॥

तस्मिन् पराङ्मुखे दैत्ये महिषे शुम्भदानवः । सन्दष्टौष्ठपुटः कोपाद्भ्रुकुटीकुटिला
निर्मथ्य पाणिना पाणिं धनुरादाय भैरवम् । सज्जञ्चकार स धनुः शरांश्चाशीविषोपम

स चित्रयोधी दृढमुष्टिपातस्ततस्तु विष्णुं गरुडञ्च दैत्यः ।
बाणैर्ज्वलद्वह्निशिखानिकाशैः क्षिप्तैरसंख्यैः परिघातहीनैः ॥ २७ ॥
विष्णुश्च दैत्येन्द्रशराहतोऽपि भुशुण्डिमादाय कृतान्ततुल्याम् ।
तया भुशुण्ड्या च पिपेष मेषं शुम्भस्य पत्रं धरणीधराभम् ॥ २८ ॥
तस्मादवप्लुत्य हताच्च मेषाद्भूमौ पदातिः स तु दैत्यनाथः ।
ततो महीस्थस्य हरिः शरौघान् मुमोच कालानलतुल्यभासः ॥ २९ ॥
शरैस्त्रिभिस्तस्य भुजं बिभेद षड्भिश्च शीर्षं दशभिश्च केतुम् ।
विष्णुर्विकृष्टैः श्रवणावसानं दैत्यस्य विव्याध विवृत्तनेत्रः ॥ ३० ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स तेन विद्धो व्यथितो बभूव दैत्येश्वरो विस्रुतशोणितौघः ।
ततोऽस्य किञ्चिच्चलितस्य धैर्यादुवाच शङ्खाम्बुजशार्ङ्गपाणिः ॥ ३१ ॥
कुमारिवध्योऽसि रणं विमुञ्च शुम्भासुर ! स्वल्पतरैरहोभिः ।
वधं न मत्तोऽर्हसि चेह मूढ ! वृथैव किं युद्धसमुत्सुकोऽसि ॥ ३२ ॥
शुम्भो वचो विष्णुमुखान्निशम्य निमिश्च निष्पेष्टुमियेष विष्णुम् ।
गदामथोद्यम्य निमिः प्रचण्डां जघान गाढां गरुडं शिरस्तः ॥ ३३ ॥
जम्भोऽपि विष्णुं परिघेण मूर्द्धिन प्ररुष्टरत्नौघविचित्रभासा ।
तौ दानवाभ्यां विषमैः प्रहारैर्निपेतुरुर्व्यां घनपावकाभौ ॥ ३४ ॥
तत्कर्म दृष्ट्वा दितिजास्तु सर्वे जगर्जुरुच्चैः कृतसिंहनादाः ।
धनूंषि चास्फोट्य खुराभिघातैर्व्यदारयन् भूमिमपि प्रचण्डाः ।
वासांसि चैवादुधुवुः परे तु दध्मुश्च शङ्खानकगोमुखौघान् ॥ ३५ ॥
अथ संज्ञामवाप्याशु गरुडोऽपि सकेशवः । पराङ्मुखो रणात्तस्मात् पलायतमहाजवः
इति श्रीमत्स्यपुराणे देवासुरसंग्रामे एकपञ्चाशदधिकशततमोऽध्यायः ।

---

## द्विपञ्चाशदधिकशततमोऽध्यायः

### तारकासुरोपाख्याने देवासुरयुद्धवर्णनम् ।

सूत उवाच ।

दृष्ट्वालोक्य पलायन्त विभ्रष्टध्वजकार्मुकम् । हरिं देवः सहस्राक्षो मेने भग्नं दुराहवे ॥१
दैत्यांश्च मुदितान् दृष्ट्वा कर्तव्यं नाध्यगच्छत ।
अथायान्निकटे विष्णोः सुरेशः पाकशासनः ॥ २ ॥
उवाच चैनं मधुरं प्रोत्साहपरिवृंहकम् । किमेभिः क्रीडसे देव ! दानवैर्दुष्टमानसैः ॥३
दुर्जनैर्लब्धरन्ध्रस्य पुरुषस्य कुतः क्रियाः । शक्तेनोपेक्षितो नीचो मन्यते बलमात्मनः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्मान्न नीचं मतिमान् दुर्गहीनंहि सन्त्यजेत् । अथाग्रेसरसपत्न्या रथिनो जयमा
कस्ते सखाभवच्चाग्रे हिरण्याक्षवधे विभो !। हिरण्यकशिपुर्दैत्यो वीर्यशाली मदो
त्वां प्राप्यापश्यदसुरो विषमंस्मृतिविभ्रमम् । पूर्वेऽप्यतिबलायेच दैत्येन्द्राः सुर
विनाशमागताः प्राप्य शलभाइव पावकम् । युगे युगे च दैत्यानां त्वमेवान्तकरो
तथैवाद्येह मग्नानां भव विष्णो ! सुराश्रयः । एवमुक्तस्ततो विष्णु र्व्यवर्द्धत मह
ऋद्ध्या परमया युक्तः सर्वभूताश्रयोऽरिहा । अथोवाच सहस्राक्षं कालक्षममधो

दैत्येन्द्राः स्ववधोपायैः शक्त्या हन्तुं हि नान्यतः ।
दुर्जयस्तारको दैत्यो मुक्त्वा सप्तदिनं शिशुम् ॥ ११ ॥
कश्चित् स्त्रीवध्यतां प्राप्तो वधेऽन्यस्य कुमारिका ।
जम्भस्तु वध्यतां प्राप्तो दानवः क्रूरविक्रमः ॥ १२ ॥

तस्माद्वीर्येण दिव्येन जहि जम्भं जगद्गुरम् । अवध्यःसर्वभूतानां त्वां विना स तु
मया गुप्तो रणे जम्भं जगत्कण्टकमुद्धर । तद्वैकुण्ठवचः श्रुत्वा सहस्राक्षोऽमरा

समादिशत् सुरान् सर्वान् सैन्यस्य रचनां प्रति ।
यत्सारं सर्वलोकेषु वीर्य्यस्य तपसोऽपि च ॥१५ ॥

तदेकादशरुद्रांस्तु चकाराग्रेसरान् हरिः । व्यालभोगाङ्गसन्नद्धा बलिनो नीलक
चन्द्रलेखनचूडालामण्डितानुशिखण्डिनः । शूलज्वालीभिषङ्गाढ्या भुजमण्डल
पिङ्गोत्तुङ्गजटाजूटाः सिंहचर्मानुषङ्गिनः । कपालीशादयो रुद्रा विद्रावितमहासु

कपाली पिङ्गलो भीमो विरूपाक्षो विलोहितः ।
अजेशः शासनः शास्ता शम्भुः खण्डो ध्रुवस्तथा ॥ १६ ॥

एते एकादशानन्तबला रुद्राः प्रभाविनः । पालयन्तो बलस्याग्रे दारयन्तश्च दान

आप्याययन्तस्त्रिदशान् गर्जन्त इव चाम्बुदाः ।
हिमाचलाभे महति काञ्चनाम्बुरुहस्रजि ॥ २१ ॥

प्रचलच्चामरे हेमघण्टासङ्घातमण्डिते। ऐरावते चतुर्दन्ते मातङ्गेऽचलसंस्थिते ॥

महामदजलस्रावे कामरूपे शतक्रतुः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्थौ हिमगिरेः शृङ्गे भानुमानिव दीप्तिमान् ॥ २३ ॥
अपारक्षत् पदं सव्यं मारुतोऽमितविक्रमः । जुगोपापरमग्निस्तु ज्वालापूरितदिङ्मुखः
पृष्ठरक्षोऽभवद्विष्णुः ससैन्यस्य शतक्रतोः । आदित्या वसवो विश्वेमरुतश्चाश्विनावपि
गन्धर्वा राक्षसा यक्षाः सकिन्नरमहोरगाः । नानाविधायुधाश्चित्रा दधाना हेमभूषणम्

कोटिशः कोटिशः कृत्वा वृन्दं चिह्नोपलक्षितम् ।
विश्रावयन्तः स्वाङ्कीर्तिं वन्दिवृन्दपुरःसरा ।
चेरुर्दैत्यवधे हृष्टाः सहेन्द्राः सुरजातयः ॥ २७ ॥
शतक्रतोरमरनिकायपालिता पताकिनी गजशतवाजिनादिता ।
सितातपत्रध्वजपटकोटिमण्डिता बभूव सा दितिसुतशोकवर्धिनी ॥ २८ ॥

आयान्तीमवलोक्याथ सुरसेनाङ्गजासुरः । गजरूपी महाम्भोदसङ्घातो भाति भैरवः ॥
...श्वधायुधोदैत्यो दंशितोष्ठकसंपुटः । ममर्दचरणे देवांश्चिक्षेपान्यान् करेण तु ॥३०॥
...रान् परशुना जघ्ने दैत्येन्द्रो रौद्रविक्रमः । तस्य पातयतः सेनां यक्षगन्धर्वकिन्नराः

मुमुचुः संहताः सर्वे चित्रशस्त्रास्त्रसंहतिम् ।
पाशान् परश्वधांश्चक्रान् भिन्दिपालान् समुद्गरान् ॥ ३२ ॥
कुन्तान् प्रसानसींस्तीक्ष्णान् मुद्गरांश्चापि दुःसहान् ।
तान् सर्वान् सोऽग्रसद्दैत्यः कवलानिव यूथपः ॥ ३३ ॥

...गास्फालितदीर्घाग्रकरास्फोटेन पातयन् । विचचार रणे देवान् दुष्प्रेक्ष्यो गजदानवः

यस्मिन् यस्मिन्निपतति सुरवृन्दे गजासुरः ।
तस्मिन् तस्मिन् महाशब्दो हाहाकारकृतोऽभवत् ॥ ३५ ॥

...विद्रवमाणं तद्बलं प्रेक्ष्य समन्ततः । रुद्राः परस्परं प्रोचुरहङ्कारोत्थितार्चिषः ॥३६

भो ! भो ! गृह्णीत दैत्येन्द्रं मर्दतैनं हताश्रयम् ।
कर्षतैनं शितैः शूलैर्भञ्जतैनुञ्च मर्म्मसु ॥ ३७ ॥

...पाली वाक्यमाकर्ण्य शूलं शितशिखामुखम् । सम्मार्ज्य वामहस्तेन संरम्भविवृतेक्षणः
...बद्ध भ्रुकुटीवक्रो दैत्येन्द्राभिमुखो रणे । दृढेन मुष्टिबन्धेन शूलं विष्टभ्य निर्मलम्

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जघान कुम्भदेशे तु कपाली गजदानवम् । ततो दशापि ते रुद्रा निर्म्मलायोमयै
जघ्नुः शूलैश्च दैत्येन्द्रं शैलवर्ष्माणमाहवे । स्रुतशोणितरन्ध्रस्तु शितशूलमुखाहि
बभौ कृष्णच्छविर्दैत्यः शरदीवामलं सरः । प्रोत्फुल्लारुणनीलाब्जसङ्घातः सर्वतो
भस्मशुभ्रतनुच्छायै रुद्रैर्हंसैरिवावृतः । उपस्थितार्तिर्दैत्योऽथ प्रचलत्कर्णपल्लवः ।
शम्भुं बिभेद दशनैर्नाभिदेशे गजासुरः । दृष्ट्वा सक्तन्तु रुद्राभ्यां नवरुद्रास्ततोऽद्रु
ततक्षुर्विविधैः शस्त्रैः शरीरममरद्विषः । निर्भया बलिनो युद्धे रणभूमौ व्यवस्थि
मृतं महिषमासाद्य वने गोमायवो यथा । कपालिनौ परित्यज्य गतश्चासुरपुङ्गवः ।
वेगेन कुपितो दैत्यो नवरुद्रानुपाद्रवत् । ममर्द चरणाघातैर्दन्तैश्चापि करेण च ॥
स तैस्तुमुलयुद्धेन श्रममासादितो यदा । तदा कपाली जग्राह करन्तस्यामरद्विषः ।
भ्रामयामास वेगेन ह्यतीव च गजासुरम् । दृष्ट्वाश्रमातुरं दैत्यं किञ्चित्स्फुरितजीवि

निरुत्साहं रणे तस्मिन् गतयुद्धोत्सवोद्यमम् ।
ततः पतत एवास्य चर्म चोत्कृत्य भैरवम् ॥ ४९ ॥

स्रवत्सर्वाङ्गरक्तौघं चकाराम्बरमात्मनः । दृष्ट्वा विनिहतं दैत्यं दानवेन्द्रा महाबल
वित्रेसुर्दुद्रुवुर्जग्मुर्निपेतुश्च सहस्रशः । दृष्ट्वा कपालिनो रूपं गजचर्माम्बरावृतम् ॥

दिक्षु भूमौ तमेवोग्रं रुद्रं दैत्या व्यलोकयन् ।
एवं विलुलिते तस्मिन् दानवेन्द्रे महाबले ॥ ५२ ॥

द्विपाधिरूढोदैत्येन्द्रो हतदुन्दुभिना ततः । कल्पान्ताम्बुधराभेन दुर्द्धरेणापि दानव
निमिरभ्यपतत्तूर्णं सुरसैन्यानि लोडयन् । यां यां निमिगजो याति दिशंतांतांसवाह
सन्त्यज्य दुद्रुवुर्देवा भयार्तास्त्यक्तहेतवः । गन्धेन सुरमातङ्गा दुद्रुवुस्तस्य हस्तिन
पलायितेषु सैन्येषु सुराणां पाकशासनः । तस्थौ दिक्पालकैः सार्द्धमष्टभिः केशवेन

संप्राप्तो निमिमातङ्गो यावच्छक्रगजं प्रति ।
तावच्छक्रगजो यातो मुक्त्वा नादं स भैरवम् ॥ ५७ ॥

ध्रियमाणोऽपि यत्नेन न स्वकैरवतिष्ठति । पलायिते गजे तस्मिन्नारूढः पाकशास
विपरीतमुखो युद्ध्यद्दानवेन्द्रबलं प्रति । शतक्रतुस्तु वज्रेण निमिं वक्षस्यताडय

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गदया दन्तिनश्चास्य गण्डदेशेऽहनद् दृढम् ।
तत्प्रहारमचिन्त्यैव निमिर्निर्भयपौरुषः ॥ ६० ॥
...वतं कटीदेशे मुद्गरेणाभ्यताडयत् । स हतो मुद्गरेणाथ शक्रकुञ्जर आहवे ॥ ६१॥
...म पश्चाच्चरणैर्धरणीं भूधराकृतिः । लाघवात् क्षिप्रमुत्थाय ततोऽमरमहागजः ॥६२
...दपससर्पाशु भीषितो निमिहस्तिना । ततो वायुर्ववौ रूक्षो बहुशर्करपांसुलः ॥६३
...मुखो निमिमातङ्गो जवनाचलकम्पनः । सुतरक्तो बभौ शैलो घनचारुह्रदो यथा ॥
...शोऽपि गदां गुर्वीन्तस्य दानवहस्तिनः । चिक्षेप वेगाद्दैत्येन्द्रो निपपातास्य मूर्द्धनि
...ो गदानिपातेन स तेन परिमूच्छितः । दन्तैर्भित्वा धरां वेगात् पपाताचलसन्निभः
...ते तु गजे तस्मिन् सिंहनादो महानभूत् । सर्वतः सुरसैन्यानां गजबृंहितबृंहितैः ॥
हेषारवेण चाश्वानां गुणास्फोटैश्च धन्विनाम् ।
गजन्तं निहतं दृष्ट्वा निमिश्चापि पराङ्मुखः ॥ ६८ ॥
...ा च सिंहनादश्च सुराणामतिकोपनः । जम्भो जज्वाल कोपेन पीताज्य इव पावकः
...सुरान्कोपरक्ताक्षोधनुष्यारोप्यसायकम् । तिष्ठतेत्यब्रवीत्तावत्सारथिंचाप्यचोदयत्
...न चलतस्तस्य तद्रथस्याभवद्द्युतिः । यथादित्यसहस्रस्याभ्युदितस्योदयाचले ॥७१
...किना रथेनाजौ किङ्किणीजालमालिना । शशिशुभ्रातपत्रेण स तेन स्यन्दनेन तु ॥
...न् सुरसैन्यानां हृदयं समदृश्यत । तमायान्तमभिप्रेक्ष्य धनुष्याहितसायकम् ॥७३
...नुदीनात्मा दृढ़माधत्त कार्मुकम् । बाणश्च तैलधौताग्रमर्द्धचन्द्रमजिह्मगम् ॥७४॥
...स्य सशरश्चापं रणे चिच्छेद वृत्रहा । क्षिप्रं सन्त्यज्यतच्चापं जम्भो दानवनन्दनः ॥
...न् कार्मुकमादाय वेगवद्भारसाधनम् । शरांश्चाशीविषाकारांस्तैलधौतानजिह्मगान्
...ं विव्याधदशभिर्जत्रुदेशे तु पत्रिभिः । हृदये च त्रिभिश्चापिद्वाभ्याञ्चस्कन्धयोर्द्वयोः
...ोऽपिदानवेन्द्राय बाणजालमपीदृशम् । अप्राप्तान् दानवेन्द्रस्तु शरान् शक्रभुजेरितान्
...च्छेद दशधाकाशे शरैरग्निशिखोपमैः । ततस्तु शरजालेन देवेन्द्रो दानवेश्वरम् ॥
...च्छादयत यत्नेन वर्षास्विव घनैर्नभः । दैत्योऽपि बाणजालन्तद्व्यधमत्सायकैःशितैः
...था वायुर्घनाटोपं परिवार्य दिशोमुखे । शक्रोऽथ क्रोधसंरम्भान्न विशेषयते यदा ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दानवेन्द्रं तदा चक्रे गन्धर्वास्त्रं महाद्भुतम्। तदुत्थतेजसा व्याप्तमभूद्गगनगोच...
गन्धर्वनगरैश्चापि नानाप्राकारतोरणैः। अश्वद्भिरद्भुताकारैरस्त्रवृष्टिः समन्ततः।...
अथास्त्रवृष्ट्या दैत्यानां हन्यमाना महाचमूः। जम्भं शरणमागच्छदप्रमेयपराक्र...

व्याकुलोऽपि स्वयं दैत्यः सहस्राक्षास्त्रपीडितः।
स्मरन् साधुसमाचारं भीतत्राणपरोऽभवत्॥८५॥

अथास्त्रं मौसलं नाम मुमोच दितिनन्दनः। ततो यो मुसलैः सर्वमभवत् पूरितं...
एकप्रहारकरणैरप्रधृष्यैः समन्ततः। गन्धर्वनगरन्तेषु गन्धर्वास्त्रविनिर्मितान्।...
गान्धर्वमस्त्रं सन्धाय सुरसैन्येषु चापरम्। एकैकेन प्रहारेण गजानश्वान्महार...
रथाश्वान् सोऽहनत् क्षिप्रंशतशोऽथसहस्रशः। ततःसुराधिपस्त्वाष्ट्रमस्त्रञ्च समु...
सन्ध्यमानेततस्त्वाष्ट्रे निश्चेरुःपावकार्चिषः। ततोयन्त्रमयान्दिव्यानायुधान्दुष्प्र...
तैर्यन्त्रैरभवद्द्वन्द्वमन्तरिक्षे वितानकम्। वितानकेन तेनाथ प्रथमं मौसले गते।...
शैलास्त्रं मुमुचे जम्भो यन्त्रसङ्घाततताडनम्। व्यामप्रमाणैरुपलैस्ततोवर्षमवर्तत...

त्वाष्ट्रस्य निर्मितान्याशु यन्त्राणि तदनन्तरम्।
तेनोपलनिपातेन गतानि तिलशस्ततः॥९३॥
यन्त्राणि तिलशः कृत्वा शैलास्त्रं परिमूर्धसु।
निपपातातिवेगेनादारयत् पृथिवीं ततः॥९४॥

ततो वज्रास्त्रमकरोत् सहस्राक्षः पुरन्दरः। तदोपलमहाहर्षं व्यशीर्यत समन्ततः...
ततः प्रशान्ते शैलास्त्रे जम्भो भूधरसन्निभः। ऐषीकमस्त्रमकरोदभीतोऽतिपरा...
ऐषीकेनागमन्नाशं वज्रास्त्रं शक्रवल्लभम्। विजृम्भत्यथ चैषीके परमास्त्रेति दु...
जज्वलुर्देवसैन्यानि सस्यन्दनगजानि तु। दह्यमानेष्वनीकेषु तेजसा सुरसत्तमः...
आग्नेयमस्त्रमकरोद्बलवान् पाकशासनः। तेनास्त्रेण ततस्त्वैन्द्रमग्रसत्तदनन्त...
तस्मिन् प्रतिहते चास्त्रेपावकास्त्रंव्यजृम्भत। जज्वालकायंजम्भस्यसरथश्च ससा...
ततः प्रतिहतः सोऽथ दैत्येन्द्रः प्रतिभानवान्। वारुणास्त्रंमुमोचाथशमनंपावका...
ततो जलधरै व्योमस्फुरद्विद्युल्लताकुलैः। गम्भीरमुरजध्वानैरापूरितमिवाम्बरम्।...

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गोव(?)न्द्रकरतुल्याभिर्जलधाराभिरम्बरम् । पतन्तीभिर्जगत् सर्वं क्षणेनापूरितं बभौ ॥
तत(?)माग्नेयमस्त्रं तत् प्रविलोक्यसुराधिपः । वायव्यमस्त्रमकरोन्मेघसङ्घातनाशनम्
(?)वायव्यास्त्रबलेनाथ निर्धूते मेघमण्डले । बभूव विमलं व्योमनीलोत्पलदलप्रभम् ॥
वायुना चातिघोरेण कम्पितास्ते तु दानवाः ।
न शेकुस्तत्र ते स्थातुं रणेऽतिबलिनोऽपि ये ॥ १०६ ॥
(?)जम्भोऽभवच्छैलो दशयोजनविस्तृतः । मारुतप्रतिघातार्थं दानवानां भयापहः ॥
(?)नानायुधोदग्रतेजोऽभिज्वलितद्रुमः । ततः प्रशमिते वायौ दैत्येन्द्रे पर्वताकृतौ ॥
(?)शनीं वज्रमयीं मुमोचाशु शतक्रतुः । तयाशन्या पतितया दैत्यस्याचलरूपिणः ॥
(?)राणिव्यशीर्यन्त समन्तान्निर्झराणि तु । ततः सा दानवेन्द्रस्य शैलमाया न्यवर्तत
(?)वृत्तशैलमायोऽथ दानवेन्द्रो महोत्कटः । बभूव कुञ्जरो भीमो महाशैलसमाकृतिः ॥
(?)ममर्द सुरानीकं दन्तैश्चाप्यहनत् सुरान् । बभञ्ज पृष्ठतः कांश्चित्करेणावेष्ट्यदानवः ॥
(?) क्षपयतस्तस्य सुरसैन्यानि वृत्रहा । अस्त्रं त्रैलोक्यदुर्धर्षं नारसिंहं मुमोच ह ॥
(?) सिंहसहस्राणि निश्चेरुर्मन्त्रतेजसः । कृष्णदंष्ट्राट्टहासानि क्रकचाभनखानि च ॥
(?)पादितगात्रोऽसौ गजमायांव्यपोथयत् । ततश्चासौविषोघोरोऽभवत्फणशताकुलः
(?)निश्वासनिर्दग्धं सुरसैन्यं महारथः । ततोऽस्त्रं गारुडं चक्रे शक्रश्चारुभुजस्तदा ॥
(?)गरुत्मतस्तस्मात् सहस्राणि विनिर्ययुः । तैर्गरुत्मभिरासाद्य जम्भं भुजगरूपिणम्
कृतन्तु खण्डशो दैत्यं सास्यमाया व्यनश्यत ।
प्रनष्टायान्तु मायायां ततो जम्भो महासुरः ॥ ११८ ॥
(?)र रूपमतुलं चन्द्रादित्यपथानुगम् । विवृत्तवदनो ग्रस्तुमियेष सुरपुङ्गवान् ॥ ११९ ॥
(?)स्यविविशुर्वक्त्रं समहारथकुञ्जराः । सुरसेनाविशत् भीमं पातालोत्तानतालुकम्
(?)षु ग्रस्यमानेषु दानवेन बलीयसा । शक्रोदैन्यं समापन्नः श्रान्तबाहुः सवाहनः ॥
(?)यतां नाऽध्यगच्छत् प्रोवाचेदं जनार्दनम् । किमनन्तरमत्रास्ति कर्तव्यस्यावशेषितम्
(?)श्रित्य घटामोऽस्य दानवस्य युयुत्सवः । ततो हरिरुवाचेदं वज्रायुधमुदारधीः ॥
न साम्प्रतं रणस्त्याज्यस्त्वया कातरभैरवः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वर्द्धस्वाशु महामायां पुरन्दर ! रिपुम्प्रति ॥ १२४ ॥
मयैष लक्षितोदैत्योऽधिष्ठितःप्राप्तपौरुषः । मा शक्र ! मोहमागच्छ क्षिप्रमस्त्रं स्मर...
ततः शक्र प्रकुपितो दानवं प्रति देवराट् । नारायणास्त्रं प्रयतो मुमोचासुरवक्ष...
एतस्मिन्नन्तरे दैत्यो विवृतास्योऽग्रसत् क्षणात् ।
त्रीणि लक्षाणि गन्धर्वकिन्नरोरगराक्षसान् ॥ १२७ ॥
ततो नारायणास्त्रं तत् पपातासुरवक्षसि । महास्त्रभिन्नहृदयः सुस्राव रुधिरञ्च...
रणागारमिवोद्गारं तत्याजासुरनन्दनः । तदस्त्रतेजसा तस्य रूपं दैत्यस्य नाशि...
तत एवान्तर्दधे दैत्यो वियत्यनुपलक्षितः । गगनस्थःसदैत्येन्द्रः शस्त्रासनमतीन्द्रि...
मुमोच सुरसैन्यानां संहारे कारणम्परम् ।
प्रासान् परश्वधांश्चक्रान् बाणान् वज्रान् समुद्गरान् ॥ १३१ ॥
कुठारान् सह खड्गैश्च भिन्दिपालानयोगुडान् । ववर्ष दानवो रौद्रो ह्यवन्ध्यानक्षया...
तैरस्त्रैर्दानवैर्मुक्तैर्देवानीकेषु भीषणैः । बाहुभिर्द्धरणिः पूर्णा शिरोभिश्च सकुण्डलै...
ऊरुभिर्गजहस्ताभैः करीन्द्रैर्वाचलोपमैः । भग्नेषादण्डचक्राक्षै रथैः सारथिभिः स...
दुःसञ्चाराभवत् पृथ्वी मांसशोणितकर्दमा । रुधिरौघह्रदावर्ता शवराशिशिलोच्च...
कबन्धनृत्यसङ्कुले स्रवद्वसास्रकर्दमे । जगत्त्रयोपसंहृतौ समे समस्तदेहिनाम् ॥ १...
शृगालगृध्रवायसाः परं प्रमोदमादधुः । क्वचिद्विकृष्टलोचनः शवस्य रौति वायस...
विकृष्टपीवरान्त्रकाः प्रयान्ति जम्बुकाः क्वचित् ।
क्वचित् स्थितोऽतिभीषणः स्वतुण्डनिहितौरसः ॥ १३८ ॥
मृतस्य मांसमादाय श्वजातयश्च संस्थिताः ।
क्वचिद् वृको गजासृजम्पपौ निलीयतान्त्रतः ॥ १३९ ॥
क्वचित्तुरङ्गमण्डलीर्विकृष्यते श्वजातिभिः । क्वचित् पिशाचजातकैः प्रपीतशोणिताल...
स्वकामिनीयुतैर्द्रुतं प्रमोदमत्तसम्भ्रमैः । ममैतदानयाननं खुरो यमस्तु मे प्रियः ॥ १...
करोऽयमञ्वमन्निभो (?) ममास्तु कर्णपूरकः । सरोषमीक्षते परावपां विना प्रियं...
परा प्रिया ह्यवापयत् धृतोष्णशोणितासवम् । विकृष्य शावचर्म तत्प्रवद्धसान्द्रप...

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चकार यक्षकामिनीतरं कुठारपाटितम् ।
गजस्य दन्तमासृजं प्रगृह्य कुम्भसम्पुटम् ॥ १४४ ॥
विपाट्य मौक्तिकं परं प्रियाप्रसादमिच्छते ।
समांसशोणितासवं पपुश्च यक्षराक्षसाः ॥ १४५ ॥
त्वाश्च केशवासितं रसं प्रगृह्य पाणिना । प्रियाविमुक्तजीवितं समानयामृगासवम् ॥
पश्यतां प्रयाति मे गतं श्मशानगोचरम् । नरस्य तज्जहात्यसौ प्रशस्य किन्नराननम्
लाग एष नोभयं दधाति मुक्तजीवितः । तदानतस्य शक्यते मया तदेकयाननम् ॥
ति प्रियाय वल्लभा वदन्ति यक्षयोषितः । परे कपालपाणयः पिशाचयक्षराक्षसाः ॥
न्ति देहि मे मम ममातिभक्ष्यचारिणः । परेऽवतीर्य शोणितापगासु धौतमूर्तयः ॥
पितॄन् प्रतर्प्य देवताः समर्चयन्ति चामिषैः ।
गजोडुपे सुसंस्थितास्तरन्ति शोणितं ह्रदम् १५१ ॥
इति प्रगाढसङ्करे सुरासुरे सुसङ्गरे ।
भयं समुज्झ्यदुर्जया भटाः स्फुटन्ति मानिनः ॥१५२ ॥
ततः शक्रो धनेशश्च वरुणः पवनोऽनलः ।
यमोऽपि निर्ऋतिश्चापि दिव्यास्त्राणि महाबलाः ॥ १५३ ॥
आकाशे मुमुचुः सर्वे दानवानभिसन्धय ते ।
अस्त्राणि व्यर्थतां जग्मुर्देवानां दानवान् प्रति ॥ १५४ ॥
क्रमेणाप्ययुद्ध्यन्त संहतास्तुमुलेन च । गतिं न विविदुश्चापि श्रान्ता दैत्यस्य देवताः
गात्रभिन्नसर्वाङ्गा ह्यकिञ्चित्करताङ्गताः । परस्परं व्यलीयन्त गावः शीतार्दिता इव
न् हरिर्दृष्ट्वा देवान् शक्रमुवाच ह । ब्रह्मास्त्रं स्मर देवेन्द्र ! यस्यावद्ध्योन विद्यते
विष्णुना चोदितः शक्रः सस्मारास्त्रं महौजसम् ॥ १५७ ॥
संपूजितं नित्यमरातिनाशनं समाहितं बाणममित्रघातने ।
धनुष्यजय्ये विनियोज्य बुद्धिमानभूत्ततो मन्त्रसमाधिमानसः ॥१५८॥
स मन्त्रमुच्चार्य [illegible] दैत्यस्य धियाभिसन्ध्य तु ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विकृष्य कर्णान्तमकुण्ठदीधितिम् मुमोच वीक्ष्याम्बरमार्गमुन्मुखः ॥१५
अथासुरः प्रेक्ष्य महास्त्रमाहितं विहाय मायामवनौ व्यतिष्ठत।
प्रवेपमानेन मुखेन शुष्यता बलेन गात्रेण च सम्भ्रमाकुलः ॥१६०॥
ततस्तु तस्यास्त्रवराभिमन्त्रितः शरोऽर्द्धचन्द्रप्रतिमो महारणे।
पुरन्दरस्यासनबन्धुताङ्कितो नवार्कबिम्बं वपुषा विडम्बयन् ॥१६१॥
किरीटकोटिस्फुटकान्तिसङ्कटं सुगन्धिनानाकुसुमाधिवासितम्।
प्रकीर्णधूमज्वलनाभमूर्द्धजम् पपात जम्भस्य शिरः सकुण्डलम् ॥१६२॥

तस्मिन् विनिहते जम्भे दानवेन्द्राःपराङ्मुखाः। ततस्ते भग्नसंकल्पाः प्रययुर्यत्रतार
तांस्तु त्रस्तान् समालोक्य श्रुत्वा रोषमगात्परम्। सजम्भदानवेन्द्रन्तु सुरैरणमुखेह
सावलेपं ससंरम्भं सगर्वं सपराक्रमम्। साविष्कारमनाकारं तारको भावमाविश
स जैत्रं रथमास्थाय सहस्रेण गरुत्मताम्। स कोपाद्दानवेन्द्राणां सुरै रणमुखे गतः॥१
सर्वायुधपरिष्कारः सर्वास्त्रपरिरक्षितः। त्रैलोक्य ऋद्धिसंपन्नः सुविस्तृतमहान
रणायाभ्यपतत्तूर्णं सैन्येन महता वृतः। जम्भास्त्रक्षतसर्वाङ्गं त्यक्त्वैरावतदन्तिन
सज्जं मातलिना गुप्तं रथमिन्द्रस्य तेजसा। तप्तहेमपरिष्कारं महारत्नसमन्वितम् ॥१
चतुर्योजनविस्तीर्णं सिद्धसङ्घपरिष्कृतम्। गन्धर्वकिन्नरोद्गीतमप्सरोनृत्यसङ्कुलम्
सर्वायुधमसम्बाधं विचित्ररचनोज्ज्वलम्। तं रथं देवराजस्य परिवार्य समन्ततः॥१
दंशिता लोकपालास्तु तस्थुः सगरुडध्वजाः।
ततश्चचाल वसुधा ततो रूक्षो मरुद्ववौ ॥ १७२ ॥

ततोऽम्बुधय उद्भूतास्ततो नष्टा रविप्रभा। ततस्तमःसमुद्भूतं नातोऽदृश्यन्त तार
ततो जज्वलुरस्त्राणि ततोऽकम्पत वाहिनी। एकतस्तारको दैत्यः सुरसङ्घास्तु वै
लोकावसादमेकत्र जगत्पालनमेकतः। चराचराणि भूतानि सुरासुरविभेदतः॥१
तद्द्विधाप्येकतां यातं ददृशुः प्रेक्षका इव। यद्वस्तु किञ्चिल्लोकेषु त्रिषु सत्तास्वरूप
तत्त्वत्राद्दृश्यदखिलं खिलीभूतविभूतिकम् ॥ १७६ ॥
अस्त्राणि तेजांसि धनानि धैर्यं सेनाबलं वीर्य्यपराक्रमौ च।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सत्वौजसां तन्निकरं बभूव सुरासुराणां तपसो बलेन ॥ १७७ ॥
…भिमुखमायान्तं नवभिर्नतपर्वभिः । बाणैरनलकल्पाग्रैर्विभिदुस्तारकं हृदि ॥१७८॥
स तानचिन्त्य दैत्येन्द्रः सुरबाणान् गतान् हृदि ।
नवभिर्नवभिर्बाणैः सुरान् विव्याध दानवः ॥ १७९ ॥
…द्रणसम्भूतैः शल्यैरिव पुरःसरै । ततश्छिन्नं शस्त्रातं संग्रामे मुमुचुः सुराः १८०
…न्तरं च कान्तानामश्रुपातमिवानिशम् । तदप्राप्तं वियत्येव नाशयामास दानवः ॥
…र्यथा कुचरितैः प्रख्यातं परमागतम् । सुनिर्मलं क्रमायातं कुपुत्रः स्वं महाकुलम् ॥
…ो निवार्य तद्बाणजालं सुरभुजेरितम् । बाणैर्व्योम दिशः पृथ्वीं पूरयामास दानवः ॥
चिच्छेद पुङ्खदेशेषु स्वकैः स्थाने च लाघवात् ।
बाणजालैः सुतीक्ष्णाग्रैः कङ्कबर्हिणवाजितैः ॥ १८४ ॥
…न्तकूटैर्विमलैः सुवर्णरजतोज्ज्वलैः । शास्त्रार्थैःसंशयप्राप्तान्यथार्थान् वै विकल्पितैः
ततः शतेन बाणानां शक्रं विव्याध दानवः ।
नारायणं च सप्तत्या नवत्या च हुताशनम् ॥ १८६ ॥
…भिर्मारुतं मूर्ध्नि यमं दशभिरेव च । धनदञ्चैव सप्तत्या वरुणञ्च तथाष्टभिः ॥१८७ ॥
…त्या निर्ऋतिं दैत्यः पुनश्चाष्टाभिरेव च । विव्याध पुनरेकैकं दशभिर्दशभिः शरैः ॥
तथा च मातलिं दैत्यो विव्याध त्रिभिराशुगैः ।
गरुडं दशभिश्चैव स विव्याध पतत्रिभिः ॥ १८९ ॥
पुनश्च दैत्यो देवानां तिलशो नतपर्वभिः ।
चकार वर्मजातानि चिच्छेद च धनूंषि तु ।
ततो विकवचा देवा विधानुष्काः शरैः कृताः ॥ १९० ॥
अथान्यानि चापानि तस्मिन् सरोषा रणे लोकपाला गृहीत्वा समन्तात् ।
शरैरक्षयैर्दानवेन्द्रं ततस्तु तदा दानवोऽमर्षसंरक्तनेत्रः ॥ १९१ ॥
शरानग्निकल्पान् ववर्षामराणाम् ततो बाणमादाय कल्पानलाभम् ।
जघानोरसि क्षिप्रमिन्द्रं सुबाहुम् महेन्द्रोऽप्यकम्पद्रथोपस्थ एव ॥ १९२ ॥



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विलोक्यान्तरिक्षे सहस्रार्कबिम्बम् पुनर्दानवो विष्णुमुद्भूतवीर्य्यम्।
शराभ्यां जघानांसमूले सलीलम् ततः केशवस्यापतच्छार्ङ्गमग्रे ॥१६३॥
ततस्तारकः प्रेतनाथं पृषत्कैर्वसुं तस्य सख्ये स्मरन् क्षुद्रभावम्।
शरैरग्निकल्पैर्जलेशस्य कायम् रणे शोषयद् दुर्जयो दैत्यराजः ॥१६४॥
शरैरग्निकल्पैश्चकाराशु दैत्यस्तथा राक्षसान् भीतभीतान् दिशासु।
पृषत्कैश्च रूक्षैर्विकारप्रयुक्तं चकारानिलं लीलयैवासुरेशः ॥ १६५ ॥
क्षणाल्लुब्धचित्ताः स्वयं विष्णुशक्रानलाद्याः सुसंहत्य तीक्ष्णैः पृषत्कैः
प्रचक्रुः प्रचण्डेन दैत्येन सार्द्धम् महासङ्गरं सङ्गरग्रासकल्पम् ॥१६६॥
अथानम्य चापं हरिस्तीक्ष्णबाणैर्हनत् सारथिं दैत्यराजस्य हृद्यम् ॥
ध्वजं धूमकेतुः किरीटं महेन्द्रो धनेशो धनुः काञ्चनानद्धपृष्ठम्।
यमो बाहुदण्डं रथाङ्गानि वायुर्निशाचारिणामीश्वरस्यापि वर्म ॥१६
दृष्ट्वा तद्युद्धममरैरकृत्रिमपराक्रमम्। दैत्यनाथः कृतं संख्ये स्वबाहुयुगबान्धवः ॥१
मुमोच मुद्गरं भीमं सहस्राक्षाय सङ्गरे। दृष्ट्वा मुद्गरमायान्तमनिवार्यमथाम्बरे ॥१
रथादाप्लुत्य धरणीमगमत् पाकशासनः। मुद्गरोऽपि रथोपस्थे पपात परुषस्वनः
स रथं चूर्णयामास न ममार च मातलिः।
गृहीत्वा पट्टिशं दैत्यो जघानोरसि केशवम् ॥ २०१ ॥
स्कन्धे गरुत्मतः सोऽपि निषसाद विचेतनः। खड्गेन राक्षसेन्द्रश्च चकर्त्त नरवाहन
यमश्च पातयामास भूमौ दैत्यो भुशुण्डिना। वह्निश्च भिन्दिपालेन ताडयामास भू
वायुश्च दोर्भ्यामुत्क्षिप्य पातयामास भूतले। जलेशश्च धनुष्कोट्याकुट्टयामासको
ततो देवनिकायानामेकैकं समरे ततः। जघानास्त्रैरसंख्येयैर्दैत्येन्द्रोऽमितविक्रम
लब्धसंज्ञः क्षणाद्विष्णुश्चक्रं जग्राह दुर्द्धरम्। दानवेन्द्रवसासिक्तं पिशिताशनकोमु
मुमोच दानवेन्द्रस्य दृढं वक्षसि केशवः। पपात चक्रं दैत्यस्य हृदये भास्करद्युति
व्यशीर्यत ततः काये नीलोत्पलमिवाश्मनि। ततो वज्रं महेन्द्रस्तु प्रमुमोचार्चितं
यस्मिन् जयाशा शक्रस्य दानवेन्द्ररणे त्वभूत्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तारकस्य सुसंप्राप्य शरीरं शौर्यशालिनः ॥ २०६ ॥
...शीर्यत विकीर्णार्चिः शतधा खण्डताङ्गतम्। विनाशमगमन्मुक्तं वायुना सुरवक्षसि॥
...लितं ज्वलनाभासमङ्कुशं कुलिशं यथा। विनाशमागतं दृष्ट्वा वायुश्चाङ्कुशमाहवे॥२११
...: शैलेन्द्रमुत्पाट्य पुष्पितद्रुमकन्दरम्। चिक्षेप दानवेन्द्राय पञ्चयोजनविस्तृतम् ॥
महीधरं तमायान्तं दैत्यः स्मितमुखस्तदा। जग्राह वामहस्तेन शैलं कन्दुकलीलया॥
...तो दण्डं समुद्यम्य कृतान्तः क्रोधमूर्च्छितः। दैत्येन्द्रं मूर्ध्नि चिक्षेपभ्राम्य वेगेनदुर्जयः
सोऽसुरस्यापतन्मूर्ध्नि दैत्यस्तच्च न बुद्धवान्। कल्पान्तदहनालोक्यामजय्यांज्वलनस्ततः
...र्क्तिं चिक्षेप दुर्द्धर्षां दानवेन्द्राय संयुगे। न वा शिरीषमालेव सास्य वक्षस्यराजत॥
ततः खड्गं समाकृष्य कोशादाकाशनिर्मलम्।
भासितासितदिग्भागं लोकपालोपि निर्ऋतिः ॥ २१७ ॥
चिक्षेप दानवेन्द्राय तस्य मूर्ध्नि पपात च। पतितश्चागमत् खड्गः स शीघ्रं शतखण्डताम्
जलेशस्तूग्रदुर्द्धर्षं विषपावकभैरवम्। मुमोच पाशं दैत्यस्य भुजबन्धाभिलाषकः॥
दैत्यभुजमायाद्य सर्पः सद्यो व्यपद्यत। स्फुटितक्रूरविक्रूरदशनाहिमहाहनुः ॥ २२० ॥
...तोऽश्विनौ समरुतःससाध्याः समहोरगाः। यक्षराक्षसगन्धर्वा दिव्यनानास्त्रपाणयः
...जघ्नुर्दैत्येश्वरं सर्वे संभूय सुमहाबलाः। न चास्त्राण्यस्य सज्जन्त गात्रे वज्राचलोपमे
...तो रथादवप्लुत्य तारको दानवाधिपः। जघान कोटिशो देवान् करपार्ष्णिभिरेव च
...हतशेषानि सैन्यानि देवानां विप्रदुद्रुवुः। दिशोभीतानि सन्त्यज्य रणोपकरणानि तु
...लोकपालांस्ततो दैत्यो बबन्धेन्द्रमुखान् रणे। सकेशवान् दृढैः पाशैः पशुमारः पशूनिव
...भूयो रथमास्थाय जगाम स्वकमालयम्। सिद्धगन्धर्वसंघुष्टविपुलाचलमस्तकम्॥
...स्तूयमानो दितिसुतैरप्सरोभिर्विनोदितः। त्रैलोक्यलक्ष्मीस्तद्देशे प्राविशत् स्वपुरंयथा
...विसादासने पद्मरागरत्नविनिर्मिते। ततः किन्नरगन्धर्वनागनारीविनोदितैः॥
क्षणं विनोद्यमानस्तु प्रचलन्मणिकुण्डलः ॥ २२८ ॥

इति श्रीमत्स्यपुराणे देवासुरसंग्रामे तारकजयलाभो नाम द्विपञ्चाशदधिकशततमोऽध्यायः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# त्रिपञ्चाशदधिकशततमोऽध्यायः

## तारकपीडितैर्देवैः ब्रह्मस्तुतिकरणम् ।

सूत उवाच ।

प्रादुरासीत् प्रतीहारः शुभ्रनीलांशुकाम्बरः ।
स जानुभ्यां महीं गत्वा पिहितास्यःस्वपाणिना ॥ १ ॥
उवाचानाविलं वाक्यमल्पाक्षरपरिस्फुटम् । दैत्येन्द्रमर्कवृन्दानां विभ्रन्तं भास्वरं वपु
कालनेमिः सुरान् बद्धांश्चादायद्वारि तिष्ठति । सविज्ञापयति स्थेयंक वन्दिभिरितिप्र
तन्निशम्याब्रवीद् दैत्यः प्रतीहारस्य भाषितम् । यथेष्टं स्थीयतामेभिर्गृहं मे भुवनत्र
केवलं पाशबन्धेन विमुक्तैरविलम्बितम् । एवं कृते ततो देवा दूयमानेन चेतसा ॥ ५
जग्मुर्जगद्गुरुं द्रष्टुं शरणं कमलोद्भवम् । निवेदितास्ते शक्राद्याः शिरोभिर्धरणिङ्ग
तुष्टुवुः स्पष्टवर्णार्थैर्वचोभिः कमलासनम् ॥ ६ ॥

देवा ऊचुः ।

त्वमोङ्कारोऽस्यङ्कुराय प्रसूतो विश्वस्यात्मानन्तभेदस्य पूर्वम् ।
सम्भूतस्यानन्तरं सत्वमूर्त्ते ! संहारेच्छोस्ते नमो रुद्रमूर्त्ते ! ॥ ७ ॥
व्यक्तिं नीत्वा त्वं वपुः स्वं महिम्ना तस्मादण्डात् स्वाभिधानादवित्य
द्यावापृथिव्योरूर्द्ध्वखण्डावराभ्याम् ह्यण्डादस्मात्त्वं विभागङ्करोषि ॥ ८
व्यक्तं मेरौ यज्ञनायुस्तवाभूदेवं विद्मस्त्वत्प्रणीतश्चकास्ति ।
व्यक्तं देवा जन्मनः शाश्वतस्य द्यौस्ते मूर्द्धा लोचने चन्द्रसूर्यौ ॥ ९ ॥
व्यालाः केशाः श्रोत्ररन्ध्रा दिशस्ते पादौ भूमिर्नाभिरन्ध्रे समुद्राः ।
मायाकारः कारणस्त्वं प्रसिद्धो वेदैः शान्तो ज्योतिषा त्वं विमुक्तः ॥ १
वेदार्थेषु त्वां विवृण्वन्ति बुद्ध्वा हृत्पद्मान्तः सन्निविष्टं पुराणम् ।
त्वामात्मानं लब्धयोगा गृणन्ति [illegible] सप्त सूक्ष्माः प्रणीताः ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तासां हेतुर्याष्टमी चापि गीता तस्यां तस्याङ्गीयसे वै त्वमन्तम् ।
दृष्ट्वा मूर्तिं स्थूलसूक्ष्माञ्चकार देवैर्भावाः कारणैः कैश्चिदुक्ताः ॥१२॥
सम्भूतास्ते त्वत्त एवादिसर्गे भूयस्तां तां वासनान्तेऽभ्युपेयुः ।
त्वत्सङ्कल्पेनान्तमायातिगूढः कालोमेघोध्वस्तसंख्याविकल्पः ॥१३॥
भावाभावव्यक्तिसंहारहेतुस्त्वं सोऽनन्तस्तस्य कर्त्तासि चात्मन् ।
येऽन्ये सूक्ष्माः सन्ति तेभ्योऽभिगीतः स्थूला भावाश्चावृतारश्च तेषाम् ॥१४॥
तेभ्यः स्थूलैस्तैः पुराणैः प्रतीतोभूतं भव्यं चैवमुद्भूतिभाजाम् ।
भावे भावे भावितं त्वा युनक्ति युक्तं युक्तं व्यक्तिभावान्निरस्य ।
इत्थं देवो भक्तिभाजां शरण्यस्त्राता गोप्ता नो भवानन्तमूर्त्तिः ॥१५॥
विरिञ्चिममराः स्तुत्वा ब्रह्माणमविकारिणम् । तस्थुर्मनोभिरिष्टार्थसम्प्राप्तिप्रार्थनास्ततः
...ं स्तुतो विरिञ्चिस्तु प्रसादं परमं गतः । अमरान्वरदेनाह वामहस्तेन निर्दिशन् ॥१७॥

ब्रह्मोवाच ।

नारी याऽभर्तृकाऽकस्मात् तनुस्ते त्यक्तभूषणा ।
न राजते तथा शक्र ! म्लानवक्त्रशिरोरुहा ॥ १८ ॥
...ताशन ! विमुक्तोऽपि न धूमेन विराजसे । भस्मनेव प्रतिच्छन्नो दग्धदावश्चिरोषितः ॥
...नामयमयेनैव शरीरे त्वं विराजसे । दण्डस्यालम्बनेनेव ह्यक्रुच्छुस्तु पदे पदे ॥२०॥
...जनीचरनाथोऽपि किं भीत इव भाषसे । राक्षसेन्द्रक्षताराते त्वमरातिक्षतो यथा ॥
...नुस्ते वरुणीच्छुष्का परीतस्येव वह्निना । विमुक्तरुधिरं पाशं फणिभिः प्रविलोकयन्
वायो ! भवान् विचेतस्कस्त्वं स्निग्धैरिव निर्जितः ।
किन्त्वं बिभेषि धनद ! संन्यस्तैव कुबेरताम् ॥ २३ ॥
...द्रास्त्रिशूलिनः सन्तो वदध्वं बहुशूलताम् । भवन्तः केन तत् क्षिप्तं तेजस्तु भवतामपि
...किञ्चित्करतां यातः करस्तेन विभासते । अलं नीलोत्पलाभेन चक्रेण मधुसूदन ! ॥
...किं त्वयानुदरालीनभुवनं प्रविलोकनम् । क्रियते स्तिमिताक्षेण भवता विश्वतोमुख ! ॥
...मुकाः सुरास्तेन ब्रह्मणा ब्रह्ममूर्तिना । वाचां प्रधानभूतत्वान्मरुतं तमचोदयन् ॥२७

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ विष्णुमुखैर्देवैः श्वसनः प्रतिबोधितः । चतुर्मुखं तदा प्राह चराचर गुरुं विभुम् ॥

न तु वेत्सि चराचरभूतगतं भवभावमतीव महानुच्छ्रितः प्रभवः ।
पुनरर्थिवचोविस्तृतश्रवणोपमकौतुकभावकृतः ॥ २९ ॥
त्वमनन्त करोषि जगद्भवताम् स चराचरगर्भविभिन्नगुणाम् ।
अमरासुरमेतदशेषमपि त्वयि तुल्यमहोजनकोऽसि यतः ।
पितुरस्ति तथापि मनोविकृतिः सगुणो विगुणो बलवानबलः ॥३०॥
भवतो वरलाभनिवृत्तभयः कुलिशाङ्गसुतो दितिजोऽतिबलः ।
सचराचरनिर्मथने किमिति कितवस्तु कृतोविहितो भवता ॥ ३१ ॥
किल देव त्वया स्थितये जगताम् महदद्भुतचित्रविचित्रगुणाः ।
अपि तुष्टिकृतः श्रुतकामफला विहिता द्विजनायक देवगणाः ॥३२॥
अपि नाकमभूत्किलयज्ञभुजाम् भवतो विनियोगवशात्सततम् ।
अपहृत्य विमानगणं स कृतो दितिजेन महामरुभूमिसमः ॥३३॥
कृतवानसि सर्वगुणातिशयं यमशेषमहीध्ररराजतया ।
सममिङ्गितभावविधिः स च गिरिर्गगनेन सदोच्छ्रयतां हि गतः ॥३४॥
अधिवासविहारविधावुचितो दितिजेन पविक्षतश्रृङ्गतटः ।
परिलुण्ठितरत्नगुहानिवहो बहुदैत्यसमाश्रयताङ्गमितः ॥३५॥
सुरराज ! स तस्य भयेन गतं व्यदधादशरीर इतोऽपि वृथा ।
उपयोग्यतया विवृतं सुचिरं विमलद्युतिपूरितदिग्वदनम् ॥३६॥
भवतैव विनिर्मितमादियुगे सुरहेतिसमूहमनुत्थमिदम् ।
दितिजस्य शरीरमवाप्य गतं शतधा मतिभेदमिवाल्पमनाः ॥३७॥

आसारधूलिध्वस्ताङ्गा द्वारस्थाः स्थ कदर्थिनः । लब्धप्रवेशाः कृच्छ्रेणवयं तस्यामरद्विषो गेहे ॥ सभायाममरा देव ! निकृष्टेऽप्युपवेशिताः । वेत्रहस्तैरजल्पन्तस्ततोऽपहसितास्तु तैः ॥

महार्याः सिद्धसर्वार्था भवन्तः स्वल्पभाषिणः ।
चाटुयुक्तमथो कर्म्म ह्यमरा बहुभाषत ॥४०॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सभयं दैत्यसिंहस्य [illegible] तु संस्थिताः ।
वदतेति च दैत्यस्य प्रेष्यैर्विहसिता बहु ॥४१॥
ऋतवो मूर्तिमन्तस्तमुपासन्ते ह्यहर्निशम् ।
कृतापराधसन्त्रासं न त्यजन्ति कदाचन ॥४२॥
...त्रयलयोपेतं सिद्धगन्धर्वकिन्नरैः । सुरागमुपधानित्यं गीयते तस्य वेश्मसु ॥४३॥
...कृतोपकरणैर्मित्राणि गुरुलाघवैः । शरणागतसन्त्यागी त्यक्तसत्यपरिश्रयः ॥४४॥
...ति निःशेषमथवा निःशेषं वै न शक्यते । तस्याविनयमाख्यातुं स्रष्टा तत्र परायणम् ॥
...श्रुत्वा स्वात्मभूर्देवः सुरैर्दैत्यविचेष्टिते । सुरानुवाच भगवांस्ततः स्मितमुखाम्बुजः ॥

ब्रह्मोवाच ।

अवध्यस्तारको दैत्यः सर्वैरपि सुरासुरैः ।
यस्य वध्यः स नाद्यापि जातस्त्रिभुवने पुमान् ॥४७॥
...स वरदानेन छन्दयित्वा निवारितः । तपसः साम्प्रतंराजात्त्रैलोक्यदहनात्मकात् ॥
...वव्रे वधं दैत्यः शिशुतः सप्तवासरात् । स सप्तदिवसो बालः शङ्कराद्यो भविष्यति
...तारकस्य निहन्ता स भास्कराभोभविष्यति । साम्प्रतंचाप्यपत्नीकःशङ्करोभगवान् प्रभुः
...ग्राह मुक्तवान् यस्या ह्युत्तानकरता सदा । उत्तानो वरदः पाणिरेष देव्याः सदैव तु ॥
हिमाचलस्य दुहिता सा तु देवी भविष्यति ।
तस्याः सकाशाद्यः शर्वस्त्वरण्यां पावको यथा ॥५२॥
...भविष्यति तं प्राप्य तारकोऽभिभविष्यति । मयाप्युपायः सकृतो यथैवंहि भविष्यति
...प्राप्यस्य विभवो विनश्येत्तदनन्तरम् । स्तोककालं प्रतीक्षध्वन्निर्विशङ्केन चेतसा ॥
...उक्तास्त्रिदशास्तेन साक्षात् कमलजन्मना । जग्मुस्तंप्रणिपत्येशंयथायोगं दिवौकसः
...गतेषु देवेषु ब्रह्मा लोकपितामहः । निशां सस्मार भगवान् स्वतनोःपूर्वसम्भवाम्
...भगवती रात्रिरुपतस्थे पितामहम् । तां विविक्ते समालोक्य ब्रह्मोवाचविभावरीम्

ब्रह्मोवाच ।

विभावरि ! महत्कार्यं विबुधानामुपस्थितम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्कर्तव्यं त्वया देवि ! शृणु कार्य्यस्य निश्चयम् ॥५८॥

तारको नाम दैत्येन्द्रः सुरकेतुरनिर्जितः । तस्याभावाय भगवान् जनयिष्यति चेत्
सुतं स भविता तस्य तारकस्यान्तकारकः । शङ्करस्याभवत् पत्नी सती दक्षसुता तु
सा मृता कुपिता देवी कस्मिंश्चित्कारणान्तरे । भविताहिमशैलस्यदुहिता लोकभा
विरहेण हरस्तस्या मत्वा शून्यं जगत्त्रयम् । तपस्यन् हिमशैलस्य कन्दरे सिद्धसेवि
प्रतीक्षमाणस्तज्जन्म कञ्चित्कालं निवत्स्यति । तयोः सुतप्ततपसोर्भविता यो महा
स भविष्यति दैत्यस्य तारकस्य विनाशकः । जातमात्रातुसादेवीस्वल्पसंज्ञावभा
विरहोत्कण्ठिता गाढं हरसङ्गमलालसा । तयोः सुतप्ततपसोः संयोगः स्याच्छुभा
ततस्ताभ्यान्तु जनितःस्वरूपो वाक्कलहोऽभवत् । ततोऽपिसंशयोभूयस्तारकंप्रति
तयोःसंयुक्तयोस्तस्मात्सुरतासक्तिकारणे । विघ्नस्त्वयाविधातव्योयथाताभ्यांतथा
गर्भस्थाने च तन्मातुः स्वेन रूपेण रञ्जय । ततो विहाय शर्वस्तां विश्रान्तो नर्मपूर्व
भर्त्सयिष्यति तां देवीं ततः सा कुपिता सती । प्रयास्यति तपश्चर्तुं तत्तस्मात्तपसे
जनयिष्यति यं शर्वादमितद्युतिमण्डितम् । स भविष्यति हन्ता वै सुरारीणामसंश
त्वयापि दानवा देवि ! हन्तव्यालोकदुर्जयाः । यावच्च न सती देहसंक्रान्तगुणस
तत् सङ्गमेन तावत्त्वं दैत्यान् हन्तुं न शक्ष्यसे । एवं कृतेतपस्तप्त्वासृष्टिसंहारका
समाप्तनियमा देवी यदा चोमा भविष्यति । तदा स्वमेव तद्रूपं शैलजा प्रतिपत्स्य
तनुस्तवापि सहजा सैकानंशा भविष्यति । रूपांशेन तु संयुक्ता त्वमुमायां भवि

एकानंशेति लोकस्त्वां वरदे ! पूजयिष्यति ।
भेदैर्बहुविधाकारैः सर्वगा कामसाधिनी ॥७५॥
ओङ्कारवक्त्रा गायत्री त्वमिति ब्रह्मवादिभिः ।
आक्रान्तिरूर्जिताकारा राजभिश्च महाभुजैः ॥७६॥
त्वं भूरिति विशां माता शूद्रैः शैवीति पूजिता ।
क्षान्तिर्मुनीनामक्षोभ्या दया नियमिनामिति ॥७७॥

त्वंमहोपायसन्दोहानीतिर्नयविसर्पिणाम् । परिच्छित्तिस्त्वमर्थानांत्वंमही प्राणिह

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[त्व]ं मुक्तिःसर्वभूतानांत्वंगतिःसर्वदेहिनाम् । त्वञ्चकीर्तिमतांकीर्तिस्त्वंमूर्तिःसर्वदेहिनाम्

रतिस्त्वं रक्तचित्तानां प्रीतिस्त्वं हृष्टदर्शिनाम् ।
त्वं कान्तिः कृतभूषाणां त्वं शान्तिर्दुःखकर्म्मणाम् ॥८०॥
त्वं भ्रान्तिः सर्वबोधानां त्वं गतिः क्रतुयाजिनाम् ।
जलधीनां महावेला त्वञ्च लीला विलासिनाम् ॥८१॥
सम्भूतिस्त्वं पदार्थानां स्थितिस्त्वं लोकपालिनी ।
त्वं कालरात्रिर्निःशेषभुवनावलिनाशिनी ॥८२॥

...कण्ठग्रहानन्ददायिनी त्वं विभावरी । इत्यनेकविधैर्देवि ! रूपैर्लोकेत्वमर्चिता ॥८३

ये त्वां स्तोष्यन्ति वरदे ! पूजयिष्यन्ति वापि ये ।
ते सर्वकामानाप्स्यन्ति नियता नात्र संशयः ॥८४॥

...युक्ता तु निशा देवी तथेत्युक्त्वा कृताञ्जलिः । जगाम त्वरिता तूर्णं गृहंहिमगिरेःपरम्

...सीनां महाहर्म्ये रत्नभित्तिसमाश्रयाम् । ददर्श मेनामापाण्डुच्छविवक्त्रसरोरुहाम्

किञ्चिच्छ्याममुखोदग्रस्तनभारावनामिताम् ।
महौषधिगणाबद्धमन्त्रराजनिषेविताम् ॥८७॥

...द्दत्कनकोन्नद्धजीवरक्षामहोरगाम् । मणिदीपगणज्योतिर्महालोकप्रकाशिते ॥ ८८ ॥

...कीर्णबहुसिद्धार्थे मनोजपरिवारके । शुचिन्यंशुकसच्छन्नभूशय्यास्तरणोज्वले ॥८६॥

...मोदमनोरम्ये सज्जसर्वोपयोगिके । ततः क्रमेण दिवसे गते दूरं विभावरी ॥६०॥

...जृम्भत सुखोदर्के ततो मेनामहागृहे । प्रसुप्तप्रायपुरुषे निद्राभूतोपचारिके ॥६१॥

...लोके शशभृति भ्रान्तिरात्रिविहङ्गमे । रजनीचरभूतानां सङ्घैरावृतचत्वरे ॥६२॥

...कण्ठग्रहालग्नसुभगेष्टजने ततः । किञ्चिदाकुलतां प्राप्ते मेनानेत्राम्बुजद्वये ॥ ६३ ॥

...विवेश मुखे रात्रिः सुचिरस्फुटसङ्गमा । जन्मदाया जगन्मातुः क्रमेण जठरान्तरे ॥

...विवेशान्तरं जन्म मन्यमाना क्षपा तु वै । अरञ्जयच्छविर्देव्या गुहारण्ये विभावरी॥

...तो जगत्पतिप्राणहेतुर्हिमगिरिप्रिया । ब्राह्मे मुहूर्ते सुभगे व्यसूयत गुहारणिम् ॥६६॥

तस्यान्तु जायमानयां जन्तवः स्थाणुजङ्गमाः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अभवन् सुखिनः सर्वे सर्वलोकनिवासिनः ॥ ९७ ॥
नारकाणामपि तदा सुखं स्वर्गसमं महत् । अभवत् क्रूरसत्त्वानां चेतः शान्तं च देहिनाम्
ज्योतिषामपि तेजस्त्वमभवत् सुरतोन्नता । वनाश्रिताश्चौषधयः स्वादुवन्ति फलानि
गन्धवन्ति च माल्यानि विमलश्च नभोऽभवत् । मारुतश्च सुखस्पर्शो दिशाश्च सुमनोहरा
तेन चोद्भूतफलितपरिपाकगुणोज्ज्वलाः । अभवत् पृथिवी देवी शालिमालाकुला
तपांसि दीर्घचीर्णानि मुनीनां भावितात्मनाम् ।
तस्मिन् गतानि साफल्यं काले निर्मलचेतसाम् ॥ १०२ ॥
विस्मृतानि च शस्त्राणि प्रादुर्भावं प्रपेदिरे ।
प्रभावस्तीर्थमुख्यानां तदा पुण्यतमोऽभवत् ॥ १०३ ॥
अन्तरिक्षे सुराश्चासन् विमानेषु सहस्रशः । समहेन्द्रहरिब्रह्मवायुवह्निपुरोगमाः ॥ १
पुष्पवृष्टिं प्रमुमुचुस्तस्मिंस्तु हिमभूधरे । जगुर्गन्धर्वमुख्याश्च ननृतुश्चाप्सरोगणाः ॥ १
मेरुप्रभृतयश्चापि मूर्तिमन्तो महाबलाः । तस्मिन् महोत्सवे प्राप्ते दिव्यप्रभृतपाणयः
सरितः सागराश्चैव समाजग्मुश्च सर्वशः । हिमशैलोऽभवल्लोके तथा सर्वैश्चराचरैः
सेव्यश्चाप्यभिगम्यश्च सश्रेयांश्चाचलोत्तमः । अनुभूयोत्सवं देवाजग्मुः स्वानालयान्मु
देवगन्धर्वनागेन्द्रशैलशीलावनीगुणैः । हिमशैलसुता देवी स्वयं पूर्विकया ततः ॥ १
क्रमेण वृद्धिमानीता लक्ष्मीं वानलसैर्बुधैः । क्रमेण रूपसौभाग्यप्रबोधैर्भुवनत्रयम्
अजयद्भूषयच्चाति निःसाधारैर्नगात्मजा । एतस्मिन्नन्तरे शक्रो नारदं देवसम्मतम्
देवर्षिमथ सस्मार कार्य्यसाधनसत्वरम् ।
स्मृतिं शक्रस्य विज्ञाय जातान्तु भगवांस्तदा ॥ ११२ ॥
आजगाम मुदा युक्तो महेन्द्रस्य निवेशनम् ।
तं सुदृष्ट्वा सहस्राक्षः समुत्थाय महासनात् ॥ ११३ ॥
यथार्हेण तु पाद्येन पूजयामास वासवः । शक्रप्रणीतान्तां पूजां प्रतिगृह्य यथाविधि
नारदः कुशलं देवमपृच्छत् पाकशासनम् ।
पृष्टे च कुशले सक्तः प्रोवाच वचनं प्रभुः ॥ ११५ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इन्द्र उवाच।

...स्याङ्कुरे तावत् सम्भूते भुवनत्रये। तत्फलोद्भवसम्पत्तौ त्वं भवातन्द्रितो मुने!
...चैतत् समस्तं त्वं तथापि परिचोदकः। निर्वृतिं परमां याति निवेद्यार्थंसुहृज्जने
...था शैलजा देवी योगं यायात् पिनाकिना। शीघ्रंतदुद्यमः सर्वैरस्मत्पक्षैर्विधीयताम्
...कार्यार्थमखिलन्तत आमन्त्र्य नारदः। शक्रं जगाम भगवान् हिमशैलनिवेशनम्॥
...द्वारे स विप्रेन्द्रश्चित्रवेत्रलताकुले। वन्दितो हिमशैलेन निर्गतेन पुरोमुनिः॥
...प्रविश्य भवनं भुवोभूषणताङ्गतम्। निवेदितेस्वयं हैमे हिमशैलेन विस्तृते॥१२१॥
...सने मुनिवरो निषसादातुलद्युतिः। यथार्हं चार्घ्यपाद्यञ्च शैलस्तस्मै न्यवेदयत्॥
...स्तु प्रतिजग्राह तमर्घं विधिवत्तदा। गृहीतार्घं मुनिवरमपृच्छच्छ्लक्ष्णया गिरा॥
...लं तपसः शैलः शनैःस्फुल्लाननाम्बुजः। मुनिरप्यद्रिराजानमपृच्छत् कुशलं तदा॥

नारद उवाच।

...ऽवतारिताः सर्वे सन्निवेशे महागिरे!। पृथुत्वं मनसा तुल्यं कन्दराणां तथाचल!
...त्वन्ते गुणौघानां स्थावरादतिरिच्यते। प्रसन्नता च तोयस्य मनसोऽप्यधिकाचते
...क्षयामः शैलेन्द्र! शिष्यतेकन्दरोदरात्। नचलक्ष्मीस्तथा स्वर्गेकुत्राधिकतयास्थिता
...तपोभिर्मुनिभिः ज्वलनार्कसमप्रभैः। पावनैः पावितो नित्यं त्वत्कन्दरसमाश्रितैः
...त्य विमानानि स्वर्गवासविरागिणः। पितुर्गृह इवासन्ना देवगन्धर्वकिन्नराः॥
अहो! धन्योऽसि शैलेन्द्र! यस्य ते कन्दरं हरः।
अध्यास्ते लोकनाथोऽपि समाधानपरायणः॥ १३०॥
...वति देवर्षौ नारदे सादरङ्गिरा। हिमशैलस्य महिषी मेना मुनिदिदृक्षया॥१३१॥
...ता दुहित्रा तु स्वल्पालिपरिचारिका। लज्जाप्रणयनम्राङ्गी प्रविवेश निवेशनम्॥
...स्थितो मुनिवरः शैलेन सहितो वशी। दृष्ट्वा तु तेजसोराशिं मुनिं शैलप्रिया तदा
...दे गूढवदना पाणिपद्मकृताञ्जलिः। तां विलोक्य महाभागो महर्षिरमितद्युतिः॥१३४
...र्भिरमृतोद्गाररूपाभिस्तां व्यवर्धय। ततो विस्मितचित्ता तु हिमवद्गिरिपुत्रिका
उदैक्षन्नारदं देवी मुनिमद्भुतरूपिणम्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एहि वत्सेति चाप्युक्ता ऋषिणा स्निग्धया गिरा ॥१३५॥
कण्ठे गृहीत्वा पितरमुत्सङ्गेसमुपाविशत् । उवाच माता तां देवीमभिवन्द्य पुत्रि
भगवन्तंततो धन्यंपतिमाप्स्यसि सम्मतम् । इत्युक्त्वातु ततो मात्रा वस्त्रान्तपिहिता
किञ्चित् कम्पितमूर्द्धा तु वाक्यं नोवाच किञ्चन । ततःपुनरुवाचेदं वाक्यंमातासुता
वत्से ! वन्दय देवर्षिं ततो दास्यामि ते शुभम् । रत्नक्रीड़नकं रम्यं स्थापितंयच्चिर
इत्युक्त्वा तु ततो वेगादुद्धृत्य चरणौ तदा । ववन्दे मूर्द्धिनसन्धाय करपङ्कजकुड्म

कृते तु वन्दने तस्या माता सखीमुखेन तु ।
चोदयामास शनकैस्तस्याः सौभाग्यशंसिनाम् ॥ १४१ ॥
शरीरलक्षणानान्तु विज्ञानाय तु कौतुकात् ।
स्त्रीस्वभावाद्यद्दुहितुश्चिन्तां हृदि समुद्वहन् ॥ १४२ ॥

ज्ञात्वा तदिङ्गितं शैलो महिष्या हृदयेन तु । अनुद्गीर्णोक्षतिर्मेने रम्यमेतदुपस्थित
चोदितः शैलमहिषी सख्या मुनिवरस्तदा । स्मिताननो महाभागो वाक्यंप्रोवाचनारद
न जातोऽस्याः पतिर्भद्रे ! लक्षणैश्च विवर्जिता । उत्तानहस्ता सततं चरणैर्व्यभिचारि
स्वच्छायया भविष्येयंकिमन्यद्वहुभाष्यते । श्रुत्वैतत्सम्भ्रमाविष्टो ध्वस्तधैर्योमहा

नारदं प्रत्युवाचाथ साश्रुकण्ठो महागिरिः ।

हिमवानुवाच ।

संसारस्यातिदोषस्य दुर्विज्ञेया गतिर्यतः ॥ १४७ ॥
सृष्ट्यां चावश्यभाविन्यां केनाप्यतिशयात्मना ।
कर्त्रा प्रणीता मर्य्यादा स्थिता संसारिणामियम् ॥ १४८ ॥

यो जायतेहियद्वीजोजनितुः सह्यसार्थकः । जनिताचापिजातस्य नकश्चिदितियत्स्थु
स्वकर्मणैव जायन्ते विविधा भूतजातयः । अण्डजो ह्यण्डजाज्जातः पुनर्जायेत मा
मानुषाच्च सरीसृप्यां मनुष्यत्वेन जायते । तत्रापि जातौ श्रेष्ठायां धर्म्मस्योत्कर्ष
अपुत्रजन्मिनः शेषाः प्राणिनः समवस्थिताः । मनुजास्तत्र जायन्ते यतो न गृहधर्म
क्रमेणाश्रमसंप्राप्तिर्ब्रह्मचारिव्रतादनु । तस्य कर्तुर्नियोगेन संसारो येन वर्द्धितः ॥१

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

...संसारस्य कुतो वृद्धिः सर्वेस्युर्व्यर्थदारिग्रहाः। अतः कर्त्रा तु शास्त्रेषु सुतलाभःप्रशंसितः
...विनां मोहनार्थाय नरकत्राणसंश्रयात्। स्त्रिया विरहिता सृष्टिर्जन्तूनां नोपपद्यते ॥
...जातिस्तु प्रकृत्यैव कृपणा दैन्यभाषिणी। शास्त्रालोचनसामर्थ्यामुज्झितंतासुवेधसा
...त्रेषूक्तमसन्दिग्धं बहुवारं महाफलम्। दशपुत्रसमा कन्या या नस्याच्छीलवर्जिता

वाक्यमेतत् फलभ्रष्टं पुंसि ग्लानिकरम्परम्।
कन्या हि कृपणाऽशोच्या पितुर्दुःखविवर्द्धिनी ॥ १५८ ॥

...पि स्यात् पूर्णसर्वाढ्या पतिपुत्रधनादिभिः। किंपुनर्दुर्भगा हीना पतिपुत्रधनादिभिः
...लोकवान् सुतायामेशरीरैदोषसंग्रहम्। अहो! मुह्यामिशुष्यामिग्लामिसीदामिनारद!
...युक्तमथ वक्तव्यमप्राप्यमपि साम्प्रतम्। अनुग्रहेण मे च्छिन्धि दुःखंकन्याश्रयं मुने!

परिच्छिन्नेऽप्यसन्दिग्धे मनः परिभवाश्रयम्।
तृष्णा मुष्णाति निष्णाता फललोभाश्रया शुभा ॥ १६२ ॥

...र्यां हि परमं जन्म कुलानामुभयात्मनाम्। इहामुत्रसुखायोक्तं सत्पतिप्राप्तिसंज्ञितम्
...र्मः सत्पतिःस्त्रीणांविगुणोऽपि पतिःकिल। नप्राप्यते विनापुण्यैःपतिर्नार्याकदाचन
...नो निःसाधनोधर्म्मःपरिमाणोज्झिता रतिः। धनं जीवितपर्याप्तंप तौनार्याःप्रतिष्ठितम्
...र्धनो दुर्भगो मूर्खः सर्वलक्षणवर्जितः। दैवतं परमं नार्याः पतिरुक्तः सदैव हि ॥
...त्वयाचोक्तंहिदेवर्षे! न जातोऽस्याः पतिः किल। एतद्दौर्भाग्यमतुलमसंख्यंगुरुदुःसहम्
...चराचरे भूतसर्गे यद्यापि च नो मुने। न स जात इति ब्रूषे तेन मे व्याकुलं मनः ॥
...नुष्यदेवजातीनां शुभाशुभनिवेदकम्। लक्षणं हस्तपादादौ विहितैर्लक्षणैः किल ॥
...यमुत्तानहस्तेति त्वयोक्ता मुनिपुङ्गव!। उत्तानहस्तता प्रोक्ता यावतामेव नित्यदा ॥

शुभोदयानां धन्यानां न कदाचित् प्रयच्छताम्।
स्वच्छाययास्याश्चरणौ त्वयोक्तौ व्यभिचारिणौ ॥ १७१ ॥

...नापि श्रेयतां ह्याशा मुने! तु प्रतिभाति नः। शरीरलक्षणाश्चान्ये पृथक्फलनिवेदिनः
...सौभाग्यधनपुत्रायुःपतिलाभानुशंसनम्। तैश्च सर्वैर्विहीनेयं त्वमात्थ मुनिपुङ्गव! ॥
...र्वं मे सर्वं विजानासि सत्यमागतिचारतः। मुह्यामि मुनिशार्दूल! हृदयंदीर्यतीव मे

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्युक्त्वा विरतःशैलो महादुःखविचारणात् । श्रुत्वैतदखिलं तस्माच्छैलराजमुखाद्गु
स्मितपूर्वमुवाचेदं नारदो देवचोदितः ।
नारद उवाच ।
हर्षस्थानेऽपि महति त्वया दुःखं निरूप्यते ॥ १७६ ॥
अपरिच्छिन्नवाक्यार्थे मोहंयासिमहागिरे ! । इमां शृणु गिरंमत्तो रहस्यपरिनिष्ठि
समाहितोमहाशैल ! मयोक्तस्यविचारणे । न जातोऽस्याःपतिर्दिव्यायन्मयोक्तंमहा
न स जातो महादेव भूतभव्यभवोद्भवः । शरण्यः शाश्वतः शास्ता शङ्करः परमेश्वर
ब्रह्मविष्ण्विन्द्रमुनयो जन्ममृत्युजरार्दिताः । तस्यैते परमेशस्य सर्वे क्रीड़नका गिरे
आस्ते ब्रह्मा तदिच्छातः संभूतो भुवनप्रभुः । विष्णुर्युगे युगे जातो नानाजातिर्महा
मन्यसे मायया जातं विष्णुश्चापि युगे युगे ।
आत्मनो न विनाशोऽस्ति स्थावरान्तेऽपि भूधर ! ॥ १८२ ॥
संसारे जायमानस्य म्रियमाणस्य देहिनः । नश्यते देह एवात्र नात्मनो नाश उच्य
ब्रह्मादिस्थावरान्तोऽयं संसारोयःप्रकीर्त्तितः । स जन्ममृत्युदुःखार्त्तो ह्यवशःपरि
महादेवोऽचलः स्थाणुर्न जातो जनकोऽजरः ।
भविष्यति पतिः सोऽस्या जगन्नाथो निरामयः ॥ १८५ ॥
यदुक्तश्च मया देवीलक्षणैर्वर्जिता तव । शृणु तस्यऽपि वाक्यस्य सम्यक्त्वेनविवा
लक्षणं दैविको ह्यङ्कः शरीरावयवाश्रयः । सर्वायुर्द्धनसौभाग्यपरिमाणप्रकाश
अनन्तस्याप्रमेयस्य सौभाग्यस्यास्य भूधर ! । नैवाङ्को लक्षणाकारः शरीरे संवि
अतोऽस्या लक्षणं गात्रे शैल! नास्ति महामते!। यथाहमुक्तवानस्याह्युत्तानकरतां
उत्तानो वरदः पाणिरेष देव्याः सदैव तु । सुरासुरमुनिव्रातवरदेयं भविष्यति ॥
यथा प्रोक्तं तदा पादौ स्वच्छाया व्यभिचारिणौ ।
अस्याः शृणु ममात्रापि वाग्युक्तिं शैलसत्तम ! ॥ १९१ ॥
चरणौ पद्मशङ्काशावस्याःस्वच्छनखोज्वलौ । सुरासुराणांनमतांकिरीटमणिकान्ति
विचित्रवर्णैर्भासन्तौ स्वच्छायाप्रतिबिम्बितौ । भार्याजगद्गुरोर्ह्येषा वृषाङ्कस्यमहीभृ

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जननी लोकधर्म्मस्य सम्भूता भूतभावनी ।
शिवेयं पावनायैव त्वत्क्षेत्रे पावकद्युतिः ॥ १६४ ॥
तद्यथा शीघ्रमेवैषा योगं यायात् पिनाकिना ।
तथा विधेयं विधिवत्त्वया शैलेन्द्रसत्तम ! ॥ १६५ ॥
अत्यन्तं हि महत्कार्यं देवानां हिमभूधर ! ।

सूत उवाच ।

एवं श्रुत्वा तु शैलेन्द्रो नारदात् सर्वमेव हि ॥ १६६ ॥
त्मानं स पुनर्जातं मेने मेनापतिस्तदा । नमस्कृत्य वृषाङ्काय तदा देवाय धीमते ॥
उवाच सोऽपि संहृष्टो नारदन्तु हिमाचलः ।

हिमवानुवाच ।

दुस्तरान्नरकात् घोरादुद्धृतोऽस्मि त्वया मुने ! ॥ १६८ ॥
तालादहमुद्धृत्यसप्तलोकाधिपः कृतः । हिमाचलोऽस्मिविख्यातस्त्वया मुनिवराधुना
माचले चलगुणां प्रापितोऽस्मि समुन्नतिम् । आनन्ददिवसाहारि हृदयं मेऽधुना मुने !
नाध्यवस्यति कृत्यानां प्रविभागविचारणम् ।
यदि वाचामधीशः स्यान्त्वद्गुणानां विचारणे ॥ २०१ ॥
द्विधानां नियतममोघं दर्शनं मुने ! । तवास्मान्प्रति चापल्यं व्यक्तं मम महामुने !
द्विरेव कृत्योऽहं निवासायात्मरूपिणम् । मुनीनां देवतानांच स्वयं कर्तापि कल्मषम्
यापि वस्तुन्येकस्मिन्नाज्ञा मे सम्प्रदीयताम् । इत्युक्तवति शैलेन्द्रे स तदा हर्षनिर्भरे ॥
वाच नारदो वाक्यं कृतं सर्वमिति प्रभो ! । सुरकार्ये य एवार्थस्तवापि सुमहत्तरः ॥
त्युक्त्वा नारदः शीघ्रं जगाम त्रिदिवं प्रति । स गत्वा शक्रभवनममरं सन्ददर्श ह ॥
नोऽभिरूपे स मुनिरुपविष्टो महासने । पृष्टः शक्रेण प्रोवाच हिमजासंश्रयांकथाम् ॥

नारद उवाच ।

भूत यत्तु कर्तव्यं तन्मया कृतमेव हि । किन्तु पञ्चशरस्यैव समयोऽयमुपस्थितः ॥
युक्तो देवराजस्तु मुनिना कार्यदर्शिना । चूताङ्कुरास्त्रं सस्मार भगवान् पाकशासनः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

संस्मृतस्तु तदा क्षिप्रं सहस्राक्षेण धीमता । उपतस्थे रतियुतः सविलासोभषध्वजः
प्रादुर्भूतन्तु तं दृष्ट्वा शक्रः प्रोवाच सादरम् ।
शक्र उवाच ।
उपदेशेन बहुना किन्त्वां प्रतिवदे प्रियम् ॥ २११ ॥
मनोभवासि तेन त्वं वेत्सि भूतमनोगतम् । तद्यथार्थकमेवत्त्वं कुरु नाकसदाम्प्रि
शङ्करं योजय क्षिप्रं गिरपुत्र्या मनोभव !। संयुतो मधुना चैव ऋतुराजेन दुर्जय !
इत्युक्तो मदनस्तेन शक्रेण स्वार्थसिद्धये ।
काम उवाच ।
अनया देवसामग्र्या मुनिदानवभीमया ॥ २१४ ॥
दुःसाध्यः शङ्करो देवः किन्न वेत्सि जगत्प्रभो ! ।
तस्य देवस्य वेत्थ त्वं कारणन्तु यदव्ययम् ॥ २१५ ॥
प्रायः प्रसादः कोपोऽपि सर्वो हि महतां महान् ।
सर्वोपभोगसारा हि सुन्दर्यः स्वर्गसम्भवाः ॥ २१६ ॥
अध्याश्रितश्चयत्सौख्यं भवता नष्टचेष्टितम् । प्रमादादथ विभ्रश्येदीशम्प्रति विचिन्त
प्रागेव चेह दृश्यन्ते भूतानां कार्यसम्भवाः ।
विशेषं काङ्क्षतां शक्र ! सामान्याद् भ्रंशनं फलम् ॥ २१८ ॥
श्रुत्वैतद्वचनं शक्रस्तमुवाचामरैर्युतः ।
शक्र उवाच ।
वयं प्रमाणास्ते ह्यत्र रतिकान्त ! न संशयः ॥ २१९ ॥
सन्देशेन विना शक्तिरपकारस्य नेष्यते । कस्यचिच्च क्वचिद्दृष्टं सामर्थ्यं न तु सर्व
इत्युक्तः प्रययौ कामः सखायं मधुमाश्रितः । रतियुक्तो जगामाशु प्रस्थन्तु हिमभूभृ
स तु तत्राकरोच्चिन्तां कार्यस्योपायपूर्विकाम् ।
महार्था ये हि निष्कम्पा मनस्तेषां सुदुर्जयम् ॥ २२२ ॥
तदादावेव संक्षोभ्य नियतं सुजयो भवेत् । संसिद्धिं प्राप्नुयश्चैवपूर्वं संशोध्यमा

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्यन्न विविधैर्भावैर्द्वेषानुगमनं विना । क्रोधः क्रूरतरासङ्गाद्द्रावणेर्ष्यां महासखीम् ॥
चापल्यमूर्ध्नि विध्वस्तधैर्याधारां महाबलाम् ।
तामस्य विनियोक्ष्यामि मनसो विकृतिम्पराम् ॥ २२५ ॥
पिधाय धैर्यद्वाराणि सन्तोषमपकृष्य च । अवगन्तुं हि मां तत्र न कश्चिदतिपण्डितः
विकल्पमात्रावस्थाने वैरूप्यं मनसो भवेत् । पश्चान्मूलक्रियारम्भगम्भीरावर्तदुस्तरः ॥
करिष्यामि हरस्याहं तपस्तस्य स्थिरात्मनः । इन्द्रियग्राममावृत्य रम्यसाधनसंविधिः ॥
चिन्तयित्वेतिमदनोभूतभर्तुस्तदाश्रमम् । जगाम जगतीसारं सरलद्रुमवेदिकम् ॥२२६॥
शान्तसत्वसमाकीर्णमचलप्राणसङ्कुलम् । नानापुष्पलताजालं गगनस्थगणेश्वरम् २३०
नीलयश्रवृषभाध्युष्टनीलशाद्वलसानुकम् । तत्रापश्यत् त्रिनेत्रस्य रम्यं कञ्चिद्द्वितीयकम् ॥
वीरं लोकवीरेशमीशानसदृशद्युतिम् । यक्षकुङ्कुमकिञ्जल्कपुञ्जपिङ्गजटासटम् ॥ २३२॥
वज्रपाणिनमव्यग्रमुग्रभोगीन्द्रभूषणम् । ततो निमीलितोन्निद्रपद्मपत्राभलोचनम् २३३
प्राणमृजुस्थानस्थितनासाग्रलोचनम् । श्रवस्तरससिंहेन्द्रचर्मलम्बोत्तरीयकम् ॥२३४
श्रवणाहिफलन् मुक्तनिःश्वासानलपिङ्गलम् ।
प्रेङ्खत्कपालपर्य्यन्ततुम्बिलं विजटाचयम् ॥ २३५ ॥
वासुकिपर्यङ्कनाभिमूलनिवेशितम् । ब्रह्माञ्जलिस्थपुच्छाग्रनिबद्धोरगभूषणम् ॥२३६॥
ददर्श शङ्करं कामः क्रमप्राप्तान्तिकं शनैः । ततो भ्रमरझङ्कारमालम्बिद्रुमसानुकम् ॥
विवेश कर्णरन्ध्रेण भवस्य मदनो मनः । शङ्करस्तमथाकर्ण्य मधुरं मदनाश्रयम् २३८
सस्मार दक्षदुहितान्दयितां रक्तमानसः । ततः सा तस्य शनकैस्तिरोभूयाति निर्मला ॥
समाधिभावना तस्थौ लक्ष्यप्रत्यक्षरूपिणी । ततस्तन्मयतां यातः प्रत्यूहपिहिताशयः ॥
विचिन्त्येन बुबोधेशो विकृतिं मदनात्मिकम् । ईषत्कोपसमाविष्टो धैर्यमालम्ब्य धूर्जटिः॥
आसे मदनस्थित्या योगमायासमावृतः । स तया माययाविष्टो जज्वाल मदनस्ततः
सूक्ष्मशरीरो दुर्जेयो रोषदोषमहाश्रयः । हृदयान्निर्गतः सोऽथ वासनाव्यसनात्मकः॥
स्थलं समालम्ब्य ह्युपतस्थौ झषध्वजः । अनुयातोऽथ हृद्येन मित्रेण मधुना सह॥
सहकारतरौ दृष्ट्वा मृदुमारुतनिर्धुतम् । स्तबकं मदनोरम्यं हरवक्षसि सत्वरम् ॥२४५॥


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मुमोच मोहनं नाम मार्गणं मकरध्वजः । शिवस्य हृदये शुद्धे नाशशाली महाशरः
पपात परुषप्रांशुः पुष्पबाणो विमोहनः । ततः करणसन्देहो विद्धस्तु हृदये भवः॥२४९
बभूव भूधरौपम्यधैर्योऽपि मदनोन्मुखः । ततः प्रभुत्वाद्भावानां संक्षोभं समपद्यत
बाह्यं बहु समासाद्य प्रत्यूहप्रसवात्मकम् । ततः कोपानलोद्भूतघोरहुङ्कारभीषणम्
बभूव वदने नेत्रं तृतीयमनलाकुलम् । रुद्रस्य रौद्रवपुषो जगत्संहारभैरवम् ॥ २५१
तदन्तिकस्थे मदने व्यस्फारयत धूर्जटिः । तं नेत्रविस्फुलिङ्गेन क्रोशतान्नाकवासिनाम्
गमितोभस्मसात्तूर्णं कन्दर्पः कामिदर्पकः । सतुतं भस्मसात् कृत्वा हरनेत्रोद्भवोऽनलः
व्यजृम्भत जगद् दग्धुं ज्वालाहुङ्कारघस्मरः । ततो भवो जगद्धेतोर्व्यभजज्जातवेदसम्
सहकारे मधौ चन्द्रसुमनःसुपरेष्वपि । भृङ्गेषु कोकिलास्येषु विभागेन स्मरानलम्
स बाह्यान्तरविद्धेन हरेण स्मरमार्गणः । रागस्नेहसमिद्धान्तर्धावन् तीव्रहुताशनः
विभक्तलोकसंक्षोभकरोदुर्वारजृम्भितः । संप्राप्य स्नेहसंपृक्तं कामिनां हृदयंकिल॥२५६

ज्वलत्यहर्निशं भीमो दुश्चिकित्स्यमुखात्मकः ।
विलोक्य हरहुङ्कारज्वालाभस्मकृतं स्मरम् ॥ २५७ ॥
विललाप रतिः क्रूरं बन्धुना मधुना सह ।
ततो विलप्य बहुशो मधुना परिसान्त्विता ॥ २५८ ॥

जगाम शरणं देवमिन्दुमौलिं त्रिलोचनम् । भृङ्गानुयातां संगृह्य पुष्पितां सहकारजाम्
लतां पवित्रकस्थाने पाणौ परभृतां सखीम् । निर्बध्य तु जटाजूटं कुटिलैरलकै रतिः
उद्धूल्य गात्रं शुभ्रेण हृद्येन स्मरभस्मना । जानुभ्यामवनिङ्गत्वा प्रोवाचेन्दुविभूषणम्

रतिरुवाच ।

नमः शिवायास्तु निरामयाय नमः शिवायास्तु मनोमयाय ।
नमः शिवायास्तु सुरार्चिताय तुभ्यं सदा भक्तकृपापराय ॥ २६२ ॥
नमो भवायास्तु भवोद्भवाय नमोऽस्तु ते ध्वस्तमनोभवाय ।
नमोऽस्तु ते गूढमहाव्रताय नमोऽस्तु मायागहनाश्रयाय ॥ २६३ ॥
नमोऽस्तु शर्वाय नमः शिवाय नमोऽस्तु सिद्धाय पुरातनाय ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नमोऽस्तु कालाय नमः कलाय नमोस्तु ते ज्ञानवरप्रदाय ॥ २६४ ॥
नमोऽस्तु ते कालकलातिगाय नमो निसर्गामलभूषणाय।
नमोऽस्त्वमेयान्धकमर्दकाय नमः शरण्याय नमोऽगुणाय ॥ २६५ ॥
नमोऽस्तु ते भीमगणानुगाय नमोऽस्तु नानाभुवनादिकर्त्रे ।
नमोऽस्तु नानाजगतां विधात्रे नमोऽस्तु ते चित्रफलप्रयोक्त्रे ॥ २६६ ॥
सर्वावसाने ह्यविनाशनेत्रे नमोऽस्तु चित्राध्वरभागभोक्त्रे ।
नमोऽस्तु भक्ताभिमतप्रदात्रे नमः सदा ते भवसङ्गहर्त्रे ॥ २६७ ॥
अनन्तरूपाय सदैव तुभ्यमसह्यकोपाय नमोऽस्तु तुभ्यम् ।
शशाङ्कचिह्नाय सदैव तुभ्यममेयमानाय नमः स्तुताय ॥ २६८ ॥
वृषेन्द्रयानाय पुरान्तकाय नमः प्रसिद्धाय महौषधाय ।
नमोऽस्तु भक्त्याभिमतप्रदाय नमोऽस्तु सर्वार्तिहराय तुभ्यम् ॥ २६९ ॥
चराचराचारविचारवर्यमाचार्यमुत्प्रेक्षितभूतसर्गम् ।
त्वामिन्दुमौलिं शरणं प्रपन्ना प्रिया प्रमेयं महतां महेशम् ॥ २७० ॥
प्रयच्छ मे कामयशः समृद्धिं पुनः प्रभो ! जीवतु कामदेवः ।
प्रियं विना त्वां प्रियजीवितेषु त्वत्तोऽपरः को भुवनेष्विहास्ति ॥२७१॥
प्रभुः प्रियायाः प्रसवः प्रियाणां प्रणीतपर्यायपरापरार्थः ।
त्वमेवमेको भुवनस्य नाथो दयालुरुन्मूलितभक्तभीतिः ॥२७२॥
इत्थं स्तुतः शङ्कर ईड्य ईशो वृषाकपिर्मन्मथकान्तया तु ।
तुतोष दोषाकरखण्डधारी उवाच चैनां मधुरं निरीक्ष्य ॥२७३॥

शङ्कर उवाच ।

भवितेति च कामोऽयं कालात् कान्तोऽचिरादपि ।
अनङ्ग इति लोकेषु स विख्यातिं गमिष्यति ॥ २७४ ॥
[...]त्वा शिरसा वन्द्य गिरिशङ्कामवल्लभा । जगामोपवनं रम्यं रतिस्तु हिमभूभृतः ॥
[...]द चापि बहुशो दीना रम्ये स्थले तु सा । मरणव्यवसायात्तु निवृत्ता सा हराज्ञया

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ नारदवाक्येन चोदितो हिमभूधरः। कृताभरणसंस्कारां कृतकौतुकमङ्गलाम्...
स्वर्गपुष्पकृतापीडांशुभ्रचीनांशुकाम्बराम्। सखीभ्यां संयुतांशैलो गृहीत्वास्वसुतां...
जगाम शुभयोगेन तदा संपूर्णमानसः। सकाननान्युपाक्रम्य वनान्युपवनानि च...
ददर्श रुदतीं नारीमप्रतर्क्यमहौजसम्। रूपेणासदृशीं लोके रम्येषु वनसानुषु॥...
कौतुकेन परामृश्य तां दृष्ट्वा रुदतीं गिरिः। उपसर्प्य ततस्तस्या निकटे सोऽभ्यगा...

हिमवानुवाच।

कासि कस्यासि कल्याणि! किमर्थञ्चापि रोदिषि।
नैतदल्पं महासत्वे कारणं लोकसुन्दरि!॥ २८२॥

सा तस्य वचनं श्रुत्वा उवाच मधुना सह। रुदती शोकजननं श्वसती दैत्यवर्द्ध...

रतिरुवाच।

कामस्य दयितां भार्यां रतिं मां विद्धि सुव्रत!।
गिरावस्मिन्महाभाग! गिरिशस्तपसि स्थितः॥ २८४॥

तेन प्रत्यूहदृष्टेनविस्फार्यालोक्य लोचनम्। दग्धोऽसौ झषकेतुस्तुममकान्तोऽति...
अहन्तु शरणं याता तं देवं भयविह्वला। स्तुतवत्यथ संस्तुत्या ततो मां गिरिशो...

तुष्टोऽहं कामदयिते! कामोऽयन्ते भविष्यति।
त्वत्स्तुतिं चाप्यधीयानो नरो भक्त्या मदाश्रयः॥ २८७॥
लप्स्यते काङ्क्षितं कामं निवर्त्य मरणादितः।
प्रतीक्ष्यती च तद्वाक्यमाशावेशादिभिर्ह्यहम्॥ २८८॥
शरीरं परिरक्षिष्ये कञ्चित् कालं महाद्युते!।
इत्युक्तस्तु तदा रत्या शैलः सम्भ्रमभीषितः॥ २८९॥

पाणावादायहिसुतांगन्तुमैच्छत्स्वकम्पुरम्। भाविनोऽवश्यभावित्वाद्भवित्रीभूतभा...

लज्जमाना सखीमुखैरुवाच पितरङ्गिरिम्।

शैलदुहितोवाच।

दुर्भाग्येन शरीरेण किं ममानेन कारणम्॥ २९१॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व तादृशं प्राप्तं सुखं मे स पतिर्भवेत् । तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि तपस्यतः
त्वं वृथा लोको वहते सति साधने । जीविताद्दुर्भगाच्छ्रेयो मरणं ह्यतपस्यतः ॥
यामि न सन्देहो नियमैः शोषये तनुम् । तपसि भ्रष्टसन्देहेउ द्यमोऽर्थ जिगीषया ॥
तपः करिष्यामि यदहं प्राप्य दुर्लभा । इत्युक्तः शैलराजस्तु दुहित्रा स्नेहविक्लवः ।
उवाच वाचा शैलेन्द्रो स्नेहगद्गदवर्णया ।

हिमवानुवाच ।

उमेति चपले ! पुत्रि ! नक्षमं तावकं वपुः ॥ २६६ ॥
स चिन्तयाविष्टो दुहितां प्रशशंस च । ततोऽन्तरिक्षे दिव्या वागभूद्भुवनभूतले ॥
ति चपले ! पुत्रि ! त्वयोक्ता तनया ततः । उमेति नाम तेनास्या भुवनेषु भविष्यति
चमूर्तिमत्येषासाधयिष्यति चिन्तिताम् । इतिश्रुत्वातुवचनमाकाशात्काशपाण्डुरः
अनुज्ञाय सुतां शैलो जगामाशु स्वमन्दिरम् ।

सूत उवाच ।

शैलजापि ययौ शैलमगम्यमपि दैवतैः ॥३०० ॥
भ्यामनुयातानु नियता नगराजजा । शृङ्गं हिमवतः पुण्यं नानाधातुविभूषितम् ॥
पुष्पलताकीर्णं सिद्धगन्धर्वसेवितम् । नानामृगगणाकीर्णं भ्रमराभ्युष्टपादपम् ॥
प्रस्रवणोपेतं दीर्घिकाभिरलङ्कृतम् । नानापक्षिगणाकीर्णं चक्रवाकोपशोभितम् ॥
जस्थलजैः पुष्पैः प्रोत्फुल्लैरुपशोभितम् । चित्रकन्दरसंस्थानं गुहागृहमनोहरम् ॥
सङ्घसंजुष्टं कल्पपादपसङ्कटम् । तत्रापश्यन्महाशाखं शाखिनं हरितच्छदम् ॥
कुसुमोपेतं मनोरथशतोज्वलम् । नानापुष्पसमाकीर्णं नानाविधफलान्वितम् ॥
सूर्यस्य रुचिभिर्भिन्नसंहतपल्लवम् । तत्राम्बराणि सन्त्यज्य भूषणानि च शैलजा ॥
संवीता वल्कलैर्दिव्यैर्दर्भनिर्मितमेखला ।
त्रिः स्नातपाटलाहारा बभूव शरदां शतम् ॥ ३०८ ॥
मेकेन शीर्णेन पर्णेनावर्त्तयत्तदा । निराहारा शतं साभूत्सा नानातपसान्निधिः॥३०९॥
उद्वेजिताः सर्वे प्राणिनस्तत्तपोऽग्निना । ततः सस्मार भगवान् मुनीन्सप्तशतक्रतुः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ते समागम्य मुनयः सर्वे समुदितास्ततः। पूजिताश्च महेन्द्रेण पप्रच्छुस्तं प्रयोजन
किमर्थन्तु सुरश्रेष्ठ! संस्मृतास्तुवयन्त्वया। शक्रःप्रोवाचश्रृण्वन्तु भगवन्तः! प्रयोज
हिमाचले तपो घोरं तप्यते भूधरात्मजा। तस्या ह्यभिमतं कामं भवन्तः कर्तुमर्ह
ततः समापतन् देव्या जगदर्थं त्वरान्विताः। तथेत्युक्त्वा तु शैलेन्द्रं सिद्धसङ्घातसेवि
ऊचुरागत्य मुनयस्तामथो मधुराक्षरम्। पुत्रि! किन्ते व्यवसितः कामःकमललोच

तानुवाच ततो देवी सलज्जा चित्रवाङ्मुखी।
तपस्यतो महाभागाः प्राप्य मौनं भवादृशान् ॥ ३१६ ॥

वन्दनाय नियुक्ता धीः पावयत्यविकल्पितम्। प्रश्नोन्मुखत्वाद्भवतां युक्तमासनमादि
उपविष्टाः श्रमोन्मुक्तास्ततः प्रक्ष्यथ मामतः। इत्युक्त्वा सा ततश्चक्रे कृतासनपरि

सा तु तान् विधिवत्पूज्यान् पूजयित्वा विधानतः।
उवाचादित्यसंकाशान् मुनीन् सप्त सती शनैः ॥ ३१९ ॥

त्यक्त्वा व्रतात्मकंमौनंमौनंजग्राहह्रीमयम्। भावंतस्यास्तुमौनान्तं तस्याः सप्तर्षयो
गौरवाधीनतां प्राप्ताः पप्रच्छुस्तां पुनस्तथा। सापि गौरवगर्भेण मनसा चारुहासि

मुनीन् शान्तकथालापान् प्रोवाच प्रोज्झ्य वाग्यमम्।
भगवन्तो विजानन्ति प्राणिनां मानसं हितम् ॥ ३२२ ॥

मनोवागभिरत्यर्थं कन्दर्पं ते हि देहिनः। केचित्तु निपुणास्तत्र घटन्ते विबुधोद
उपायैर्दुर्लभान्भावान् प्राप्नुवन्तिह्यतन्द्रिताः। अपरेतु परिच्छिन्नानानाकाराभ्युप
देहान्तरार्थमारम्भमापतन्ति हितप्रदम्। मम त्वाकाशसम्भूतपुष्पदामविभूषितम्
वन्ध्यासुतं प्राप्तुकामा मनः प्रसरते मुहुः। अहं किल भवं देवं पतिं प्राप्तुं समुद
प्रकृत्यैव दुराधर्षं तपस्यन्तं तु संप्रति। सुरासुरैरनिर्णीतपरमार्थक्रियाश्रयम् ॥ ३
साम्प्रतं चापि निर्दग्धमदनं वीतरागिणम्। कथमाराधयेदीशं मादृशी तादृशं शिव
इत्युक्ता मुनयस्तेतु स्थिरतां मनसस्ततः। ज्ञातुमस्या वचः प्रोचुः प्रक्रमात्प्रकृता

मुनय ऊचुः।

द्विविधन्तुसुखन्तावत्पुत्रि! लोकेषुभाव्यते। शरीरस्याद्यसम्भोगैश्चेतसश्चापिनि

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कृत्यासतु दिग्वासा भीमः पितृवनेशयः । कपाली भिक्षुकोनग्नो विरूपाक्षःस्थिरक्रियः
मत्तोन्मत्तकाकारो वीभत्संस्कृतसंग्रहः । यतिनानेन कः स्वार्थो मूर्त्तानर्थेन काङ्क्षितः
यदि ह्यस्य शरीरस्य भोगमिच्छसि साम्प्रतम् ।
तत् कथन्ते महादेवात् भयभाजो जुगुप्सिताम् ॥ ३३३ ॥
वद्रकवसाभ्यक्तकपालकृतभूषणात् । श्वसदुग्रभुजङ्गेन्द्र कृतभूषणभीषणात् ॥ ३३४ ॥
श्मशानवासिनो रौद्रप्रमथानुगतात् सति ! । सुरेन्द्रमुकुटव्रातनिघृष्टचरणोऽरिहा ॥
हरिरस्ति जगद्धाता श्रीकान्तोऽनन्तमूर्त्तिमान् ।
नाथो यज्ञभुजामस्ति तथेन्द्रः पाकशासनः ॥ ३३६॥
देवतानांनिधिश्चास्तिज्वलनः सर्वकामकृत् । वायुरस्ति जगद्धातायः प्राणःसर्वदेहिनाम्
तथा वैश्रवणोराजासर्वार्थमतिमान् विभुः । एभ्यएकतमंकस्मात् नत्वंसम्प्राप्तुमिच्छसि
तानदेहसम्प्राप्त्या सुखं मनसेप्सितम् । एवमेतत्तवाप्यत्र प्रभवो नाकसम्पदाम् ॥
अस्मिन्नेह परत्रापि कल्याणप्राप्तयस्तव । पितुरेवास्ति तत् सर्वं सुरेभ्यो यन्न विद्यते ।
तस्तत्प्राप्तये क्लेशः स चाप्यत्राफलस्तव । प्रायेण प्रार्थितो भद्रे ! सुखल्पोह्यतिदुर्लभः
अस्य ते विधियोगस्य धाता कर्तात्र चैव हि ।

सूत उवाच ।

इत्युक्ता सा तु कुपिता मुनिवर्येषु शैलजा ॥ ३४२ ॥
उवाच कोपरक्ताक्षी स्फुरद्भिर्दशनच्छदैः ।

देव्युवाच ।

असद्ग्रहस्य का प्रीतिर्व्यसनस्य क्व यन्त्रणा ॥ ३४३ ॥
विपरीतार्थबोद्धारःसत्पथे केन योजिताः । एवं मां वेत्थदुष्प्रज्ञां ह्यस्थानासद्ग्रहप्रियाम्
न मां प्रति विचारोऽस्ति यत्रेहासद्ग्रहाविती । प्रजापतिसमाःसर्वे भवन्तः सर्वदर्शिनः
नूनं न वेत्थ तं देवं शाश्वतं जगतः प्रभुम् । अजमीशानमव्यक्तममेयमहिमोदयम् ॥
यास्तान्तद्धर्म्मसद्भावसम्बोधस्तावदद्भुतः । विदुर्यन्न हरिब्रह्मप्रमुखाहि सुरेश्वराः ॥३४७
यत्तस्य विभवात्स्वोत्थंभुवनेषु विजृम्भितम् । प्रकटं सर्वभूतानां तदप्यत्र नवेत्थकिम्

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कस्यैतद्गगनं मूर्त्तिः कस्याग्निःकस्यमारुतः। कस्यभूःकस्य वरुणः कश्चन्द्रार्कविलोचनः
कस्यार्चयन्ति लोकेषु लिङ्गंभक्त्या सुरासुराः। यं ब्रुवन्तीश्वरं देवा विधीन्द्राद्यामहर्षयः
प्रभावं प्रभवञ्चैव तेषामपि न वेत्थ किम्।
अदितिः कस्य मातेयं कस्माज्जातो जनार्दनः ॥ ३५१ ॥
अदितेः कश्यपाज्जाता देवा नारायणादयः। मरीचेः कश्यपः पुत्रो ह्यदितिर्दक्षपुत्रिका
मरीचिश्चापि दक्षश्चपुत्रौतौब्रह्मणःकिल। ब्रह्मा हिरण्मयात्त्वण्डाद्दिव्यसिद्धिविभूषितः
कस्यप्रादुरभूद्ध्यानात् प्रक्षुब्धाः प्राकृतांशकाः। प्रकृतौतुतृतीयायां मधुद्विड्जननक्रियाः
जाता ससर्ज षड्वर्गान् बुद्धिपूर्वान् स्वकर्म्मजान्।
अजातकोऽभवद्द्वेधा ब्रह्मणोऽव्यक्तजम्मनः ॥ ३५५ ॥
यः स्वयोगेन संक्षोभ्य प्राकृतं कृतवानिदम्। ब्रह्मणः सिद्धिसर्वार्थमैश्वर्यलोककर्तृ ता
विदुर्विष्णवादयो यच्च स्वमहिम्नासदैव हि। कृत्वान्यंदेहमन्याद्दृक्ताद्दृक् कृत्वापुनर्हरिः
कुरुते जगतः कृत्यमुत्तमाधममध्यमम्। एवमेव हि संसारो यो जन्ममरणात्मकः
कर्म्मणश्च फलं ह्येतत् नानारूपसमुद्भवम्। अथ नारायणोदेवः स्वकांच्छायांसमाश्रितः
तत्प्रेरितः प्रकुरुते जन्म नानाप्रकारकम्। सापि कर्म्मण एवोक्ता प्रेरणी विवशात्मनः
यथोन्मादादिजुष्टस्य मतिरेव हि सा भवेत्। इष्टान्येव यथार्थानि विपरीतानि मन्यते
लोकस्य व्यवहारेषु सृष्टेषु सहते सदा। धर्माधर्म्मफलावाप्तौ विष्णुरेव निबोधितः
अथानादित्वमस्यास्ति सामान्यात्तु तदात्मना।
न ह्यस्य जीवितं दीर्घंदृष्टं देहे तु कुत्रचित् ॥ ३६३ ॥
भवद्भिर्यस्य नोदृष्टमन्तमग्रमथापि वा। देहिनां धर्म्म एवैष क्वचिज्जायेत् क्वचिन् म्रियेत्
क्वचिद्गर्भगतो नश्येत् क्वचिज्जीवेज्जरामयः। क्वचित्समाः शतं जीवेत् क्वचिद्बाल्ये विपद्यते
शतायुःपुरुषो यस्तुसोऽनन्तःस्वल्पजन्मनः। जीवितोनम्रियत्यग्रे तस्मात्सोऽमरउच्यते
अदृष्टजन्मनिधना ह्येवं विष्णवादयो मताः। एतत् संशुद्धमैश्वर्यं संसारे को लभेदिह
तत्र क्षयादियोगात्तु नानाश्चर्य्यस्वरूपिणी।
तस्माद्विवश्वरान् सर्वान् मलिनान् स्वल्पभूतिकान् ॥ ३६८ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नाहं भद्राः ! किलेच्छामि ऋते शर्वात् पिनाकिनः ।
स्थितश्च तारतम्येन प्राणिनां परमन्त्विदम् ॥ ३६९ ॥
...वलैश्वर्यकार्यादिप्रमाणं महतां महत् । यस्मान्न किञ्चिदपरं सर्वं यस्मात् प्रवर्त्तते ॥
...स्यैश्वर्यमनाद्यन्तं तमहं शरणं गता । एष मे व्यवसायश्च दीर्घोऽतिविपरीतकः ॥३७१
...त वा तिष्ठतैवाथ मुनयो ! मद्विधायकाः ! । एवं निशम्य वचनं देव्यामुनिवरास्तदा
...नन्दाश्रुपरीताक्षाः सस्वजुस्तां तपस्विनीम् । ऊचुश्च परमप्रीताः शैलजां मधुरं वचः

ऋषय उचुः ।

...त्यद्भुतास्यहो देवि ! ज्ञानमूर्तिरिवामला । प्रसादयति नो भावं भवभावप्रतिश्रयात् ।
...तु विद्मो वयन्तस्य देवस्यैश्वर्यमद्भुतम् । त्वन्निश्चयस्य दृढतां वेत्तुं वयमिहागताः ॥
...चिरादेव तन्वङ्गि ! कामस्तेयंभविष्यति । क्वादित्यस्यप्रभायाति रत्नेभ्यःक्वद्युतिःपृथक्
...र्थोवर्णालिका व्यक्तःकथंत्वंगिरिशं विना । यामोनैकाभ्युपायेन तमभ्यर्थयितुंवयम्
...स्माकमपि वै सोऽर्थः सुतरां हृदि वर्त्तते । अतस्त्वमेव सा बुद्धिर्यतो नीतिस्त्वमेवहि
...नोनिःसंशयं कार्यंशङ्करोऽपिविधास्यति । इत्युक्ताः पूजितायाता मुनयोगिरिकन्यया
...युर्गिरिशं द्रष्टुं प्रस्थं हिमवतो महत् । गङ्गाम्बुप्लावितात्मानं पिङ्गबद्धजटासटम् ॥
...नुयातपाणिस्थमन्दारकुसुमस्रजम् । गिरेः संप्राप्य ते प्रस्थं ददृशुः शङ्कराश्रमम् ॥
...न्ताशेषसत्वौघं नवस्तिमितकाननम् । निःशब्दाक्षोभसलिलप्रपातं सर्वतोदिशम् ॥

तत्रापश्यंस्ततो द्वारि वीरकं वेत्रपाणिनम् ।
सप्त ते मुनयः पूज्या विनीताः कार्य्यगौरवात् ॥ ३८३ ॥
...र्मधुरभाषिण्या वाचा ते वाग्मिनाम्वराः । द्रष्टुं वयमिहायाताः शरण्यंगणनायकम्
...लोचनं विजानीहि सुरकार्य्यप्रचोदिताः । त्वमेव नोगतिस्तत्त्वं यथाकालानतिक्रमः
...कारितैष प्रायेण प्रतीहारमयः प्रभुः । इत्युक्तो मुनिभिः सोऽथ गौरवात्तानुवाच सः
...न्वास्यापरां सन्ध्यां स्नातुं मन्दाकिनीजले । क्षणेन भविता विप्रास्तत्रद्रक्ष्यथशूलिनम्
...युक्ता मुनयस्तस्थुस्ते तत्कालप्रतीक्षिणः । गम्भीराम्बुधरं प्रावृट् तृषिताश्चातकायथा
...ट क्षणेन निष्पन्नसमाधानक्रियाविधिः ! वीरासनं विभेदेशो मृगचर्मनिवासितम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ततो विनीतो जानुभ्यामवलम्ब्य महीस्थितिम् । उवाच वीरकोदेवं प्रणामैकसमाश्र
संप्राप्ता मुनयः सप्त त्वां द्रष्टुं दीप्तचेतसः । विभो ! समादिश द्रष्टुमवगन्तुमिहार्हसि
इत्युक्तो धूर्जटिस्तेन वीरकेण महात्मना । भ्रूभङ्गसंज्ञया तेषां प्रवेशाज्ञां ददौ तदा

मूर्द्धकम्पेन तान् सर्वान् वीरकोऽपि महामुनीन् ।
आजुहाव विदूरस्थान् दर्शनाय पिनाकिनः ॥ ३६३ ॥

त्वरावद्धार्द्धचूड़ास्ते लम्बमानाजिनाम्बराः । विविशुर्वेदिकां सिद्धां गिरिशस्य विभूतिभिः
वद्धपाणिपुटाक्षिप्तनाकपुष्पोत्करास्ततः । पिनाकिपादयुगलं यथा नाकनिवासिनः

ततः स्निग्धेक्षिताः शान्ता मुनयः शूलपाणिना ।
मन्मथारिं ततो हृष्टाः सम्यक् तुष्टुवुरादृताः ॥३६६ ॥

मुनय ऊचुः ।

अहो कृतार्था वयमेव साम्प्रतं सुरेश्वरोऽप्यत्र पुरो भविष्यति ।
भवत्प्रसादामलवारि सेकतः फलेन काचित्तपसा नियुज्यते ॥३६७॥
जयत्यसौ धन्यतरो हिमाचलस्तदाश्रयं यस्य सुता तपस्यति ।
सदैत्यराजोऽपि महाफलोदयो विमूलिताशेषसुरो हि तारकः ॥३६८॥
त्वदीयमंशम्प्रविलोक्य कल्मषात् स्वकं शरीरं परिमोक्ष्यते हि यः ।
स धन्यधीर्लोकपिता चतुर्मुखो हरिश्च यत्सम्भ्रमवह्निदीपितः ॥३६६॥
त्वदङ्घ्रियुग्मं हृदयेन विभ्रतो महाभितापप्रशमैकहेतुकम् ।
त्वमेव चैको विविधकृतक्रियः किलेति वाचा विधुरैर्विभाव्यते ॥४००॥
अथाद्य एकस्त्वमवैषि नान्यथा जगत्तथा निर्घृणतान्तव स्पृशेत् ।
न चेत्सि वा दुःखमिदं भवात्मिकं विहन्यते ते खलु सर्वनिष्क्रिया ॥४०१॥
उपेक्षसे चेज्जगतामुपद्रवं दयामयत्वं तव केन कथ्यते ।
स्वयोगमायामहिमागुहाश्रयं न विद्यते निर्मलभूतिगौरवम् ॥४०२॥
वयं च ते धन्यतराः शरीरिणां यदीदृशं त्वं प्रविलोकयामहे ।
अदर्शनं तेन मनोरथो यथा प्रयाति साफल्यतया मनोगतम् ॥४०३॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जगद्विधानैकविधौ जगन्मुखे करिष्यसेतो वलभिच्चरा वयम् ।
विनेमुरित्थं मुनयो विसृज्य तां गिरं गिरीशश्रुतिभूमिसन्निधौ ।
उत्कृष्टकेदार इवावनीतले सुबीजमुष्टिं सुफलाय कर्षकाः ॥ ४०४ ॥
तेषां श्रुत्वा ततोऽस्यां प्रक्रमोपक्रमक्रियाम् । वाचं वाचस्पतिरिव प्रोवाच स्मितसुन्दरः

शर्व उवाच ।

...ज्ञाने लोकविधानस्य कन्यासत्कार्य्यमुत्तमम् । जाता प्रलेयशैलस्य सङ्केतकनिरूपणाः
...त्यमुत्कण्ठताः सर्वे देवकार्यार्थमुद्यताः । तेषां त्वरन्तिचेतांसि किन्तुकार्यंविवक्षितम्
लोकयात्रानुगन्तव्या विशेषेण विचक्षणैः ।
सेवन्ते ते यतो धर्मं तत्प्रामाण्यात्परे स्थिताः ॥ ४०८ ॥
इत्युक्त्वा मुनयो जग्मुस्त्वरितास्तु हिमाचलम् ।
तत्र ते पूजितास्तेन हिमशैलेन सादरम् ॥ ४०९ ॥
ऊचुर्मुनिवराःप्रीताः स्वल्पवर्णन्त्वरान्विताः ।

मुनय ऊचुः ।

देवो दुहितरं साक्षात् पिनाकी तव मार्गते ॥४१०॥
...शीघ्रं पावयात्मानमाहुत्येवानलार्पणात् । कार्यमेतच्च देवानां सुचिरं परिवर्तते ॥
...गदुद्धरणायैष क्रियतां वै समुद्यमः । इत्युक्तस्तैस्तदा शैलो हर्षाविष्टोऽवदन्मुनीन् ॥
...समर्थोऽभवद्वक्तुमुत्तरं प्रार्थयञ्छिवम् । ततो मेना मुनीन्वन्द्य प्रोवाच स्नेहविक्लवा ॥
दुहितुस्तान् मुनींश्चैव चरणाश्रयमर्थवित् ।

मेनोवाच ।

यदर्थं दुहितुर्जन्म नेच्छन्त्यपि महाफलम् ॥ ४१४ ॥
...दैवोपस्थितं सर्वं प्रक्रमेणैव साम्प्रतम् । कुलजन्मवयोरूपविभूत्यार्द्धयुतोऽपि यः ॥
...रस्तस्यापि चाहूय सुता देवा ह्ययाचतः । तत्समस्ततपोघोरं कथं पुत्री प्रयास्यति ॥
...र्गीवाक्याद्यदत्रास्ति विधेयं तद्विधीयताम् । इत्युक्ता मुनयस्ते तु प्रियया हिमभूभृतः ॥
ऊचुः पुनरुदाराथं नास्तिकिञ्चनप्रसादकम् ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

मुनय ऊचुः ।

ऐश्वर्यमवगच्छस्व शङ्करस्य सुरासुरैः ॥ ४१८ ॥

आराध्यमानपादाब्जयुगलत्वात् सुनिर्वृतैः। यस्योपयोगि यद्रूपं सा च तत्प्राप्तयेवि
घोरं तपस्यते बाला तेन रूपेणनिर्वृतिः। यस्तद्व्रतानि दिव्यानि नयिस्यति समाप
तत्र सावहिता तावत्तस्मात् सैव भविष्यति। इत्युक्तागिरिणा सार्द्धन्तेययुर्यत्र शैल
जिताकर्ज्वलनज्वाला तपस्तेजोमयीह्युमा। प्रोचुस्तां मुनयःस्निग्धंसन्मान्य पथमाग
रम्यं प्रियं मनोहारि मारूपं तपसा दह। प्रातस्ते शङ्करः पाणिमेष पुत्रि ! ग्रहीष्यति
वयमर्थितवन्तस्ते पितरं पूर्वमागताः। पित्रा सह गृहङ्गच्छ वयं यामः स्वमन्दिरम्

इत्युक्त्वा तपसः सत्यं फलमस्तीति चिन्त्य मा।
त्वरमाणा ययौ वेश्म पितुर्दिव्यार्थशोभितम् ॥ ४२५ ॥

सा तत्र रजनीं मेने वर्षायुतसमां सतीम्। हरदर्शनसञ्जातमहोत्कण्ठा हिमाद्रिजा
ततो मुहूर्ते ब्राह्मे तु तस्याश्चक्रुः सुरस्त्रियः। नानामङ्गलसन्दोहान्यथावक्त्रमपूर्वक
दिव्यमण्डनमङ्गानां मन्दिरे वहुमङ्गले। उपासत गिरिं मूर्ता ऋतवः सार्वकामिकाः
वायवो वारिदाश्चासन् संमार्जनविधौ गिरेः। हर्म्येषु श्रीःस्वयं देवी कृतनानाप्रसाधन
कान्तिः सर्वेषु भावेषु ऋद्धिश्चाभवदाकुला। चिन्तामणिप्रभृतयो रत्नाः शैलं समन्त
उपतस्थुर्नगाश्चापि कल्पकाममहाद्रुमाः। ओषध्यो मूर्तिमत्यश्च दिव्यौषधिसमन्वित
रसाश्च धातवश्चैव सर्वे शैलस्य किङ्कराः। किङ्करास्तस्य शैलस्य व्यग्राश्चाज्ञानुवर्तिन
नद्यः समुद्रा निखिलाः स्थावरं जङ्गमश्च यत्। तत् सर्वं हिमशैलस्य महिमानमवर्द्ध
अभवन्मुनयो नागा यक्षगन्धर्वकिन्नराः। शङ्करस्यापि विबुधा गन्धमादनपर्वते ॥४
सर्वे मण्डनसम्भारास्तस्थुर्निर्मलमूर्तयः। सर्वस्यापि जटाजूटे चन्द्रखण्डं पितामहः
बबन्ध प्रणयोदारविस्फारितविलोचनः। कपालमालां विपुलां चामुण्डामूर्द्धन्यबन्ध
उवाच चापि वचनं पुत्रं जनय शङ्कर !। यो दैत्येन्द्रकुलं हत्वा मास्कैस्तर्पयिष्यति

सौरिर्ज्वलच्छिरोरत्नमुकुटश्चानलोल्वणम्।
भुजगाभरणं गृह्य सज्जं शम्भोः पुरोऽभवत् ॥ ४३८ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शक्रो गजाजिनं तस्य वसाभ्यक्ताग्रपल्लवम् ॥
दध्रे सरभसं स्विद्यद्विस्तीर्णमुखपङ्कजम् ॥ ४३९ ॥
वायुश्च विपुलं तीक्ष्णशृङ्गं हिमगिरिप्रभम् । वृषं विभूषयामास हरयानं महौजसम् ॥
वितेनुर्नयनान्तस्थाः शम्भोः सूर्यानलेन्दवः ।
स्वान्द्युतिं लोकनाथस्य जगतः कर्म्मसाक्षिणः ॥ ४४१ ॥
चिताभस्म समाधाय कपाले रजतप्रभम् । मनुजास्थिमयीं मालामाबबन्ध च पाणिना
प्रेताधिपः पुरोद्वारे सगदः समवर्तत । नानाकारमहारत्नभूषणं धनदाहृतम् ॥ ४४३ ॥
विहायोदग्रसर्पेन्द्रकटकेन स्वपाणिना । कर्णोत्तंसञ्चकारेशो वासुकिन्तक्षकं स्वयम् ॥
जलाधीशाहृतां स्थास्नुप्रसूनावेष्टितां पृथक् । ततस्तुते गणाधीशा विनयात्तत्र वीरकम्
ोचुर्य्यग्राकृते ! त्वन्नो समावेद्य शूलिने । निष्पन्नाभरणं देवं प्रसाध्येशम्प्रसाधनः ॥
समवारिधयस्तस्थुः कर्तुं दर्पणविभ्रमम् । ततो विलोकितात्मानं महाम्बुधिजलोदरे ॥
शरामालिङ्ग्य जानुभ्यां स्थाणुंप्रोवाच केशवः । शोभसे देव ! रूपेण जगदानन्ददायिना
मातरः प्रेरयाकामवधूं वैधव्यचिह्निताम् । कालोऽयमिति चालक्ष्य प्रकारेङ्गितसंज्ञया ॥
ग्रस्ताश्चोदिता देवमूचुः प्रहसिताननाः । रतिः पुरस्तव प्राप्ता नाभाति मदनोज्झिता ॥
तास्तां सन्निवार्याह वामहस्ताग्रसंज्ञया । प्रयाणे गिरिजावक्त्रदर्शनोत्सुकमानसः ॥
ततो हरो हिमगिरिकन्दराकृतिम् समुन्नतं मृदुगतिभिः प्रचोदयन् ।
महावृषङ्गणतुमुलाहितेक्षणं स भूधरानशनिरिव प्रकम्पयन् ॥ ४५२ ॥
ततो हरिर्द्रुतपदपद्धतिः पुरःसरः श्रमात् द्रुमनिकरेषु विश्रमन् ।
धरारजःशबलितभूषणोऽब्रवीत् प्रयात मा कुरुत पथोऽस्य संकटम् ॥४५३॥
प्रभोः पुनः प्रथमनियोगमूर्जयन् सुतोऽब्रवीद्भ्रुकुटिमुखोऽपि वीरकः ।
वियच्चरा वियति किमस्तिकान्तकम् प्रयात नो धरणिधराऽविदूरतः॥४५४॥
महार्णवाः कुरुत शिलोपमम्पयः सुरद्विषा गमनमहातिकर्दमान् ।
गणेश्वराश्चपलतया न गम्यताम् सुरेश्वरैः स्थिरमतिभिश्च गम्यताम् ४५५॥
न भृङ्गिणा स्वतनुमवेक्ष्य नीयते पिनाकिनः पृथुमुखमण्डमग्रतः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वृथायमप्रकटितदन्तकोटरम् त्वमायुधं वहसि विहाय पञ्जरम् ॥ ४५६ ॥
पदन्नयद्रथतुरगैः पुरद्विषा प्रमुच्यते बहुतरमातृसङ्कुलम् ।
अमी सुराः पृथगनुयायिभिर्वृताः पदातयो द्विगुणपथान् हरप्रियाः ॥४५७॥
स्ववाहनैः पवनविधूतचामरैश्चलध्वजैर्व्रजत विहारशालिभिः ।
सुराः स्वकं किमिति न रागमूर्जितं विचार्यते नियतलयत्रयानुगम् ॥ ४५८ ॥
न किन्नरैरभिभवितुं हि शक्यते विभूषणप्रचयसमुद्भवो ध्वनिः ।
स्वजातिकाः किमिति नषड्जमध्यमपृथुस्वरं बहुतरमत्र वक्ष्यते ॥४५९॥
नतानतानतनतनताङ्गताः पृथक् तया समयकृता विभिन्नताम् ।
विशङ्किता भवदतिभेदशीलिनः प्रयान्त्यमी द्रुतपदमेव गौडकाः ॥ ४६० ॥
विसंहताः किमिति न षाड्गवादयः स्वगीतकैर्ललितपदप्रयोगजैः ।
प्रभोः पुरो भवति हि यस्य चाक्षतं समुद्गतार्थकमिति तत्प्रतीयते॥४६१॥
अमी पृथग्विरचितरम्यरासकं विलासिनो बहुगमकस्वभावकम् ।
प्रयुञ्जते गिरिशयशोविसारिणं प्रकीर्णकं बहुतरनागजातयः ॥४६२॥
अमी कथं ककुभिकथाः प्रतिक्षणं ध्वनन्ति ते विविधवधूविमिश्रिताः ।
न जातयो ध्वनिमुरजासमीरिता न मूर्च्छिताः किमिति च मूर्च्छनात्मिकाः
श्रुतिप्रियक्रमगतिभेदसाधनं ततादिकं किमिति न तुम्बरेरितम् ।
न हन्यते बहुविधवाद्यडम्बरं प्रकीर्णवीणामुरजादि नाम यत् ॥ ४६४॥
इतीरिते गिरिमिवधानशालिनः सुरासुराः सपदि तु वीरकाज्ञया ।
नियामितीः प्रययुरतीव हर्षिताश्चराचरं जगदखिलं ह्यपूरयन् ॥ ४६५ ॥
इतीस्तनत्ककुभिरसन्महार्णवे स्तनद्घने विदलितशैलकन्दरे ।
जगत्यभूत्तुमुल इवाकुलीकृतः पिनाकिना त्वरितगतेन भूधरः ॥ ४६६ ॥
परिज्वलत् कनकसहस्रतोरणं क्वचिन्मिलन्मरकतवेश्मवेदिकम् ।
कचित् क्वचिद्विमलवैदूर्यभूमिकं क्वचिद्गलज्जलधररम्यनिर्झरम् ॥ ४६७ ॥
चलध्वजप्रवरसहस्रमण्डितं सुरद्रुमस्तवकविकीर्ण चत्वरम् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सिता सितारुणरुचिधातुवर्णकं श्रियोज्ज्वलं प्रविततमार्गगोपुरम् ॥४६८॥
विजृम्भिता प्रतिमध्वनिवारिदं सुगन्धिभिः पुरपवनैर्मनोहरम् ।
हरो महागिरिनगरं समासदत् क्षणादिव प्रवरसुरासुरस्तुतः ॥ ४६९ ॥
तं प्रविशन्तमगात् प्रविलोक्य व्याकुलतां नगरं गिरिभर्तुः ।
व्यग्रपुरन्ध्रिजनञ्जवियानं धावितमार्गजनाकुलरथ्यम् ॥ ४७० ॥
हर्म्यगवाक्षगतामरनारीलोचननीलसरोरुहमालम् ।
सुप्रकटासमदृश्यत काचित्स्वाभरणांशुवितानविगूढा ॥ ४७१ ॥
काप्यखिलीकृतमण्डनभूषा त्यक्तसखीप्रणयाहरमैक्षत् ।
काचिदुवाच कलङ्कतमानाकातरतां सखि ! मा कुरु मूढे ॥ ४७२ ॥
दग्धमनोभव एव पिनाकी कामयते स्वयमेव विहर्तुम् ।
काचिदपि स्वयमेव पतन्ति प्राह परां विरहस्खलिताङ्गीम् ॥ ४७३ ॥
मा चपले मदनव्यतिषङ्गं शङ्करजं स्खलनेन वदत्वम् ।
कापि कृतव्यवधानमदृष्ट्वा युक्तिवशाद्गिरिशो ह्ययमूचे ॥ ४७४ ॥
एष स यत्र सहस्रमखाद्या नाकसदामधिपाः स्वयमुक्तैः ।
नामभिरिन्दुजटं निजसेवाप्राप्तिफलायनतास्तु घटन्ते ॥ ४७५ ॥
एष न चैष स एष यदग्रे घर्मपरीततनुः शशिमौली ।
धावति वज्रधरोऽमरराजो मार्गममुं विवृतीकरणाय ॥ ४७६ ॥
एष स पद्मभवोऽयमुपेत्य प्रांशुजटामृगचर्मनिगूढः ।
सप्रणयङ्करघट्टितचक्रं किञ्चिदुवाच मितं श्रुतिमूले ॥ ४७७ ॥
एवमभूत् सुरनारिकुलानां चित्तविसंष्ठुलता गुररागात् ।
शङ्करसंश्रयणादिगिरिजायाजन्मफलं परमन्त्विति चोचुः ॥ ४७८ ॥
ततो हिमगिरेर्वेश्म विश्वकर्म्मनिवेदितम् ।
महानीलमयस्तम्भज्वलत्काञ्चनकुट्टिमम् ॥४७९॥
मुक्ताजालपरिष्कारं ज्वलितौषधिदीपितम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

क्रीड़ोद्यानसहस्राढ्यं काञ्चनाबद्धदीर्घिकम् ॥४८०॥

महेन्द्रप्रमुखाः सर्वे सुरा दृष्ट्वा तदद्भुतम् । नेत्राणि सफलान्यद्य मनोभिरिति ते दधुः
विमर्दकीर्णकेयूरा हरिणा द्वारिरोधिताः । कथञ्चित् प्रमुखास्तत्र विविशुर्नाकवासि
प्रणतेनाचलेन्द्रेण पूजितोऽथ चतुर्मुखः । चकार विधिना सर्वं विधिमन्त्रपुरःसर
शर्वेण पाणिग्रहणमग्निसाक्षिकमक्षतम् । दाता महीभृतान्नाथो होता देवश्चतुर्मुख

वरः पशुपतिः साक्षात् कन्या विश्वारणिस्तथा ।
चराचराणि भूतानि सुरासुरवराणि च ॥४८५॥

तत्राप्येते नियमतो ह्यभवन्व्यग्रमूर्तयः । मुमोचाभिनवान्सर्वान्सस्यशालीन्रसौघ
व्यग्रा तु पृथिवी देवी सर्वभावमनोरमा । गृहीत्वा वरुणः सर्वरत्नान्याभरणानि च
पुण्यानि च पवित्राणि नानारत्नमयानि तु । तस्थौ स्वाभरणो देवोहर्षदःसर्वदेहि
धनदश्चापि दिव्यानि हैमान्याभरणानि च । जातरूपविचित्राणि प्रयतः समुपस्थि
वायुर्ववौ सुसुरभिः सुखसंस्पर्शनो विभुः । छत्रमिन्दुकरोद्गारं सुसितञ्च शतक्रतु
जग्राह मुदितः स्रग्वी बाहुभिर्बहुभूषणैः । जगुर्गन्धर्वमुख्याश्च ननृतुश्चाप्सरोग
वादयन्तोऽतिमधुरं जगुर्गन्धर्वकिन्नराः । मूर्त्ताश्च ऋतवस्तत्र जगुश्च ननृतुश्च

चपलाश्च गणास्तस्थुर्लोलयन्तो हिमाचलम् ।
उत्तिष्ठन् क्रमशश्चात्र विश्वभुग्भगनेत्रहा ॥४९३॥
चकारौद्वाहिकं कृत्यं पत्न्या सह यथोचितम् ।
दत्तार्घो गिरिराजेन सुरवृन्दैर्विनोदितः ॥४९४॥
अवसत् तां क्षपान्तत्र पत्न्या सह पुरान्तकः ।
ततो गन्धर्वगीतेन नृत्येनाप्सरसामपि ॥४९५॥

स्तुतिभिर्देवदैत्यानां विबुधो विबुधाधिपः । आमन्त्र्य हिमशैलेन्द्रं प्रभाते चोमया

जगाम मन्दरगिरिं वायुवेगेन शृङ्गिणा ॥४९६॥
ततो गते भगवति नीललोहिते सहोमया रतिमलभन्न भूधरः ।
सबान्धवो भवति च कस्य नो मनो विह्वलञ्च जगति हि कन्यकापितुः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ज्वलन्मणिस्फटिकहाटकोत्कटं स्फुटद्युतिस्फटिकगोपुरं पुरम्।
हरो गिरौ चिरमनुकल्पितन्तदा विसर्जितामरनिवहोऽविशत्स्वकम् ॥४६८॥
उमासहितो देवो विजहार भगाक्षिहा। पुरोद्यानेषु रम्येषु विविक्तेषु वनेषु च ॥४६६
युक्तहृदयो देव्या मकराङ्कपुरः सरः। ततो बहुतिथे काले सुतकामा गिरेः सुता॥
सखीभिः सहिता क्रीडां चक्रे कृत्रिमपुत्रकैः।
कदाचिद्गन्धतैलेन गात्रमभ्यज्य शैलजा ॥५०१॥
चूर्णैरुद्वर्तयामास मलिनां तरितान्तनुम्। तदुद्वर्तनकं गृह्य नरं चक्रे गजाननम् ॥५०२
पुत्रकं क्रीडती देवी तं चाक्षिपयदम्भसि।
जाह्नव्यास्तु शिवासख्यास्ततः सोऽभूद्बृहत् वपुः ॥५०३॥
कायेनातिविशालेन जगदापूरयत्तदा। पुत्रेत्युवाच तं देवी पुत्रेत्यूचे च जाह्नवी॥५०४॥
गाङ्गेय इति देवैस्तु पूजितोऽभूद्गजाननः। विनायकाधिपत्यञ्च ददावस्य पितामहः॥
ततः सा क्रीडनं चक्रे पुत्रार्थं वरवर्णिनी। मनोज्ञमङ्कुरं रूढमशोकस्य शुभानना॥
वर्धयामास तं चापि कृतसंस्कारमङ्गला। बृहस्पतिमुखै विप्रैर्दिवस्पतिपुरोगमैः॥
ततो देवैश्च मुनिभिः प्रोक्ता देवी त्विदम्वचः। भवानी भवतीभव्या संभूता लोकभूयते
प्रजाः सुतफलो लोकः पुत्रपौत्रैश्च लभ्यते। अपुत्राश्च प्रजाः प्रायो दृश्यन्ते दैवहेतवः
त्वयाधुना दर्शिते मार्गे मर्यादां कर्तुमर्हसि। फलं किम्भविता देवि ! कल्पितैस्तरुपुत्रकैः॥
इत्युक्ता हर्षपूर्णाङ्गी प्रोवाचोमा शुभाङ्गिरम्।

देव्युवाच।

एवं निरुदके देशे यः कूपं कारयेद् बुधः ॥५११॥
बिन्दौ बिन्दौ च तोयस्य वसेत् सम्वत्सरन्दिवि। दशकूपसमावापीदशवापीसमोह्रदः
दशह्रदसमः पुत्रो दशपुत्रसमो द्रुमः। एषैव मम मर्यादा नियता लोकभाविनी ॥५१३
इत्युक्तास्तु ततोविप्रा बृहस्पतिपुरोगमाः। जग्मुःस्वमन्दिराण्येवभवानींवन्द्य सादरम्
गतेषु तेषु देवोऽपि शङ्करः पर्वतात्मजाम्। पाणिना लम्बमानेन शनैः प्रावेशयच्छुभाम्
ज्ञानप्रसादजननं प्रासादमनुगोपुरम्। लम्बमौक्तिकदामानं मालिकाकुलवेदिकम्॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

निर्धौतकलधौतं च क्रीडागृहमनोरमम् । प्रकीर्णकुसुमोद्दाममत्तालिकुलकूजितम् ॥
किन्नरोद्गीतसङ्गीतगृहान्तरितभित्तिकम् । सुगन्धिधूपसङ्घातमनःप्रार्थ्यमल(ल)हिम
क्रीडन्मयूरनारीभिर्वृतं वै ततवादिभिः । हंससङ्घातसंघुष्टं स्फाटिकस्तम्भवेदिक
अनारतमतिप्रीत्या बहुशःकिन्नराकुलम् । शुकैर्यत्राभिहन्यन्ते पद्मरागविनिर्मिताः ॥

भित्तयो दाडिमभ्रान्त्या प्रति विम्बितमौक्तिकाः ।
तत्राक्षक्रीडया देवो विहर्तुमुपचक्रमे ॥ ५२१ ॥

स्वच्छेन्द्रनीलभूभागे क्रीडने यत्रधिष्ठितौ । वपुः सहायतां प्राप्तौ विनोदरसनिर्वृतौ

एवं प्रक्रीडतोस्तत्र देवीशङ्करयोस्तदा ।
प्रादुर्भवन्महाशब्दस्तद्गृहोदरगोचरः ॥ ५२३ ॥
तच्छ्रुत्वा कौतुकाद्देवी किमेतदिति शङ्करम् ।
पप्रच्छ तं शुभतनुर्हरं विस्मयपूर्वकम् ॥ ५२४ ॥
उवाच देवीं नैतत्ते दृष्टपूर्वं सुविस्मिते ।
एते गणेशाः क्रीडन्ते शैलेऽस्मिन् मत्प्रियाः सदा ॥५२५॥

तपसा ब्रह्मचर्येण नियमैः क्षेत्रसेवनैः । यैरहंतोषितः पूर्वं त एते मनुजोत्तमाः ॥
मत्समीपमनु प्राप्ता मम हृद्याः शुभानने । कामरूपा महोत्साहा महारूपगुणान्विता
कर्मभिर्विस्मयं तेषां प्रयामि बलशालिनाम् । सामरस्यास्य जगतः सृष्टिसंहरणक्षम

ब्रह्मविष्णवीन्द्रगन्धर्वैः सकिन्नरमहोरगैः ।
विवर्जितोऽप्यहं नित्यन्नैभिर्विरहितो रमे ॥५२६ ॥
हृद्या मे चारु सर्वाङ्गास्त एते क्रीडते गिरौ ।
इत्युक्त्वा तु ततो देवी त्यक्त्वा तद्विस्मयाकुला ॥ ५३० ॥
गवाक्षान्तरमासाद्य प्रेक्षते विस्मिताननना ।
यावन्तस्ते कृशा दीर्घा ह्रस्वा स्थूला महोदराः ॥ ५३१ ॥
व्याघ्रेभवदनाः केचित् केचिन्मेषाजरूपिणः ।
अनेक प्राणिरूपाश्च ज्वालास्याः कृष्णपिङ्गलाः ॥ ५३२ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सौम्या भीमाः स्मितमुखाः कृष्णपिङ्गजटासटाः ।
नानाविहङ्गवदना नानाविधमृगाननाः ॥ ५३३ ॥
कौशेयचर्म्मवसना नग्नाश्चान्ये विरूपिणः ।
गोकर्णा गजकर्णाश्च बहुवक्त्रेक्षणोदराः ॥ ५३४ ॥
बहुपादा बहुभुजा दिव्यनानास्त्रपाणयः ।
अनेककुसुमापीडा नानाव्यालविभूषणाः ॥ ५३५ ॥
वृत्ताननायुधधरा नानाकवचभूषणाः ।
विचित्रवाहनारूढा दिव्यरूपा वियच्चराः ॥ ५३६ ॥
वीणा वाद्यरवाघुष्टा नानास्थानकनर्तकाः ।
गणेशांस्तांस्तथा दृष्ट्वा देवी प्रोवाच शङ्करम् ॥ ५३७ ॥

देव्युवाच ।

गणेशाः कति सङ्ख्याताः किं नामानः किमात्मकाः ।
एकैकशो मम ब्रूहि धिष्ठिता ये पृथक् पृथक् ॥ ५३८ ॥

शङ्कर उवाच ।

कोटिसङ्ख्या ह्यसङ्ख्याता नानाविख्यातपौरुषाः ।
जगदापूरितं सर्वैरेभिर्भीमै महाबलैः ॥ ५३९ ॥
...क्षेत्रेषु रथ्यासु जीर्णोद्यानेषु वेश्मसु । दानवानां शरीरेषु बालेषून्मत्तकेषु च ॥
... विशन्ति मुदिता नानाहारविहारिणः । ऊष्मपाः फेनपाश्चैव धूमपा मधुपायिनः ॥
...याः सर्वभक्षाश्च वायुपा ह्यम्बुभोजनाः । गेयनृत्योपहाराश्च नानावाद्यरवप्रियाः
न ह्येषां वै अनन्तत्वाद् गुणान् वक्तुं हि शक्यते ।

देव्युवाच ।

मार्गत्वगुत्तरासङ्गः शुद्धाङ्गो मुञ्जमेखली ॥ ५४३ ॥
...स्थेन च शिक्येन चपलो रञ्जिताननः । मृगदंष्ट्रो ह्युत्पलानां स्रग्दामो मधुराकृतिः
...णशकलोत्तानकंठश्च तालप्रवर्तकः । असौ गणेश्वरो देव ! किन्नामा किन्नरानुगाः

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

य एष गणगीतेषु दत्तकर्णो मुहुर्मुहुः ।

शर्व उवाच ।

स एष वीरको देवि ! सदा मद्धृदयप्रियः ॥ ५४६ ॥

नानाश्चर्यगुणाधारो गणेश्वरगणार्चितः ।

देव्युवाच ।

ईदृशस्य सुतस्यास्ति ममोत्कण्ठा पुरान्तक ॥ ५४७ ॥

कदाहमीदृशं पुत्रं द्रक्ष्याम्यानन्ददायिनम् ।

शर्व उवाच ।

एष एव सुतस्तेऽस्तु नयनानन्दहेतुकः ॥ ५४८ ॥

त्वया मात्रा कृतार्थस्तु वीरकोऽपि सुमध्यमे ! ।

इत्युक्त्वा प्रेषयामास विजयां हर्षणोत्सुका ॥ ५४९ ॥

वीरकानयनायाशु दुहिता हिमभूभृतः । सावरुह्य त्वरायुक्ता प्रासादादम्बरस्पृश

विजयोवाच गणपङ्क्तिमध्ये प्रवर्तिता ।

विजयोवाच ।

एहि वीरक ! चापल्यात् त्वया देवः प्रकोपितः ॥ ५५१ ॥

किमुत्तरं वदत्यर्थं नृत्यरंगे तु शैलजा । इत्युक्तस्त्यक्तपाषाणशकलो मार्जिताङ्ग

आहूतस्तु तयोद्भूतमूलप्रस्तावशंसकः । देव्याः समीपमागच्छज्जययानुगतः

प्रासादशिखरात्फुल्लरक्ताम्बुजनिभद्युतिः । तं दृष्ट्वा प्रस्नुतानल्पस्वादुक्षीरपयोध

गिरिजोवाच सस्नेहं गिरा मधुरवर्णया ॥ ५५४ ॥

अथ गद्यानि ।

उमोवाच ।

एह्येहि यातोऽसि मे पुत्रतान्देव देवेनः दत्तोऽङ्गनावीरक ! ॥ ५५५ ॥

इत्येवमङ्के निधायाथ तं पर्यष्वजत् कपोले कलवादिनम ॥ ५५६ ॥

मूर्ध्न्युपाघ्राय [illegible] भूषयामास दिव्यैः स्वयंभूषणैः किङ्किणमेखलानू

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

...केयूरहारोरुमूलगुणैः ॥५५७॥ कामलैःपल्लवैश्चित्रितैश्चारुभिर्दिव्यमन्त्रोद्भवैस्तस्य ...स्ततो भूरिभिश्चाकरोन्मिश्रसिद्धार्थकैरङ्गरक्षाविधिः ॥ ५५८ ॥ एवमादाय चोवाच ...त्वा संमूर्ध्नि गोरोचनां पत्रभङ्गोज्ज्वलैः ॥ ५५९ ॥ गच्छगच्छाधुना क्रीडसार्द्धंगणैर-...स्ततोवसं श्वभ्रवर्जाशनैर्व्यालमालाकुलाशैलसानुद्रुमदन्तिभिर्भिन्नसाराः परेसंगिनः ...॥५६०॥ जाह्नवीयं जलं क्षुब्धतोयाकुलम् कूलं मा विशेथा बहुव्याघ्रदुष्टे वने ॥५६१॥ ...त्सासंख्येषु दुर्गागणेशेष्वेतस्मिन् वीरके पुत्रभावोपतुष्टान्तः करणातिष्ठतु ॥५६२ ...स्य पितृजनप्रार्थितं भव्यमायातिभाविन्यसौभव्यता ॥ ५६३ ॥ सोऽपि निभृत्य ...गणैः सस्मयमाह बालत्वलीलारसाविष्टधीः ॥ ५६४ ॥ एषमात्रा स्वयं मे ...भूषणोऽत्र एषपटः पटलैर्विन्दुभिः सिन्दुवारस्य पुष्पैरियं मालतीमिश्रितामालिका ...शिरस्याहिता ॥ ५६५ ॥ कोऽयमातोद्यधारीगणस्तस्य दास्यामि हस्तादिदं क्रीड-...॥ ५६६ ॥ दक्षिणात् पश्चिमं पश्चिमादुत्तरमुत्तरात् पूर्वमभ्येत्य सख्या युता प्रेक्षती ...गवाक्षान्तराद्वीरकं शैलपुत्री बहिः क्रीडनं यज्जगन्मातुरेष चित्तभ्रमः ॥ ५६७ ॥ ...लुब्धो जनस्तत्र को मोहमायाति न स्वल्पचेताजडो मांसविण्मूत्रसङ्घातदेहः॥५६८ ...सभ्यन्तरन्नाकवासेश्वरैरिन्दुमौलिं प्रविष्टेषु कक्षान्तरम् ॥ ५६९ ॥ वाहनात्या-...रोहागणास्तैर्युतोलोकपालास्त्रमूर्तोह्ययं खड्गो विखड्गकरोनिर्ममः कृतान्तः कस्य ...लाहतो ब्रूत मौने भवन्तोऽस्त्रदण्डन किं दुस्पृहा ॥ ५७० ॥ भीममूर्त्याननै नास्ति ...त्यङ्घ्रौ य एषोऽस्त्रज्ञेन किं लभ्यते ॥ ५७१ ॥ मावृथा लोकपालानुगचित्तता एव ...नैतदित्यूचुरस्मै तदा देवताः ॥५७२॥ देवदेवानुगम्वीरकं लक्षणाप्राह देवी वनंपर्वता-...निर्झराण्यग्निदेव्यान्यथोभूतपानिर्झराम्भोनिपातेषु निमज्जत ॥ ५७३ ॥ पुष्पजाला-...वनेषु धामस्वपिशेत प्रत्तुङ्गनाद्रिकुञ्जेष्वनुगर्जन्तु हे मारुतां स्फोटसंक्षेपणान् ...मतः ॥ ५७४ ॥ काञ्चनोत्तुगश्रृङ्गावरोहक्षितौ हेमरेणूत्करासङ्गद्युतिम् । खेचराणां ...नाधायिनि रम्ये बहुरूपसम्पत्प्रकरैगणान्वासितम् मन्दरकन्दरे सुन्दरमन्दार-...पुष्पप्रवालाम्बुजे सिद्धनारीभिरापीतरूपामृतं विस्तृतैर्नेत्रपात्रैरनुन्मेषिभिर्वीरकं शैल-...पुत्री निमेषान्तरादस्मरत् पुत्रगृध्नी विनोदार्थिनी॥ ५७५ ॥ सोऽपि तादृक् क्षणावास-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पुण्योदयो योऽपि जन्मान्तरस्यात्मजत्वंगतः ॥५७६॥ क्रीडतस्तस्य तृप्तिः कथं जाते
योऽपि भाविजगद्बन्धसा तेजसः कल्पितः प्रतिक्षणंःदिव्यगीतक्षणो नृत्यलोलो गणे
स्वप्रणत्यक्षणः सिंहनादाकुले गण्डशैलेऽसृजद्रत्नजाले वृहत्सालताले क्षणे फुल्ल
तमालालिकाले क्षण वृक्षमूले विलोलोमराले क्षणे स्वल्पपङ्कजले पङ्कजाढ्ये
मातुरङ्के शुभे निष्कलङ्के ॥ ५७७ ॥

परिक्रीडते बाललीलाविहारी गणेशाधिपो देवतानन्दकारी ।
निकुञ्जेषु विद्याधरैर्गीतशीलः पिनाकीव लीलाविलासैः सलीलः ॥ ५७८ ॥
प्रकाश्य भुवनाभोगी ततो दिनकरे गते । देशान्तरं तदा पश्चाद्दूरमस्तावनीधर

उदयास्ते पुरोभावी यो हि चास्तेऽवनीधरः ।
मित्रत्वमस्य सुदृढं हृदये परिचिन्त्यताम् ॥ ५८० ॥
नित्यमाराधितः श्रीमान् पृथुमूलः समुन्नतः ।
नाकरोत् सेवितुं मेरुरुपहारं पतिष्यतः ॥ ५८१ ॥

यतिष्ये मा व्यवस्थेति संश्रयेणाखिलं बुधः । दिनान्तानुगतो भानुः स्वजनत्वमपू

सन्ध्यावद्धाञ्जलिपुटा मुनयोऽभिमुखा रविम् ।
याचन्त्याङ्गमनं शीघ्रं निवार्यात्मनि भाविताम् ॥ ५८३ ॥

व्यजृम्भदथ लोकेऽस्मिन् क्रमाद्वैभावरन्तमः । कुटिलस्येव हृदये कालुष्यन्दूषयन्मनः
ज्वलत्फणिफणारत्नदीपोद्योतितभित्तिके । शयनं शशिसङ्घातशुभ्रवस्त्रोत्तरच्छदम्
नानारत्नद्युतिलसच्छक्रचापविडम्बकम् । रत्नकिङ्किणिकाजालं लम्बमुक्ताकलापकम्
कमनीयचलल्लोलवितानाच्छादिताम्बरम् । मन्दिरे मन्दसञ्चारः शनैर्गिरिसुतायुतः
तस्थौ गिरिसुताबाहुलतामीलितकन्धरः । शशिमौलिसितज्योत्स्नाशुचिपूरितगोवरः
गिरिजाप्यसितापाङ्गी नीलोत्पलदलच्छविः । विभावर्या च संपृक्ता बभूवातितमोमयी

तामुवाच ततो देवः क्रीडाकेलिकलायुतम् ॥ ५८६ ॥

इति श्रीमत्स्यपुराणे शिवपार्वतीसंवादवर्णनं नाम त्रिपञ्चाशदधिकशततमोऽध्यायः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# चतुःपञ्चाशदधिकशततमोऽध्यायः

## शिवपार्वतीसंवादवर्णनम् ।

शर्व उवाच ।

शरीरे मम तन्वङ्गि ! सिते भास्यसितद्युतिः

भुजङ्गीवासिता शुद्धा संश्लिष्टा चन्दने तरौ ॥ १ ॥

...तपेन संपृक्ता रुचिराम्बरया तथा । रजनीवासिते पक्षे दृष्टिदोषं ददासि मे ॥ २ ॥

...युक्ता गिरिजा तेन मुक्तकण्ठा पिनाकिना । उवाच कोपरक्ताक्षी भ्रुकुटीकुटिलानना॥

देव्युवाच ।

...कृतेन जनः सर्वो जाड्येन परिभूयते । अवश्यमर्थात् प्राप्नोति खण्डनं शशिमण्डन !

...भिर्दीर्घचरितैर्यच्च प्रार्थिवत्यहम् । तस्या मे नियतस्त्वेष ह्यवमानः पदे पदे ॥ ५ ॥

नैवास्मि कुटिला शर्व ! विषमा नैव धूर्जटे ! ।

स विषस्त्वङ्गतः ख्यातिं व्यक्तं दोषाकराश्रयात् ॥ ६ ॥

नाहं पूष्णोऽपि दशना नेत्रे चास्मि भवस्य हि ।

आदित्यश्च विजानाति भगवान् द्वादशात्मकः ॥ ७ ॥

...न शूलं जनयसि स्वैर्दोषैर्मामधिक्षिपन् । यस्त्वं ममाह कृष्णेति महाकालेतिविश्रुतः

...स्याम्यहं परित्यक्त्वा चात्मानं तपसा गिरिम् । जीवन्त्या नास्ति मे कृत्यं धूर्त्तेन परिभूतया

...म्य तस्या वचनं कोपतीक्ष्णाक्षरम्भवः । उवाचाधिकसम्भ्रान्तः प्रणयेनेन्दुमौलिना

शर्व उवाच ।

...त्मजासि गिरिजे ! नाहं निन्दापरस्तव । त्वद्भक्तिबुद्ध्या कृतवांस्तवाहं नामसंश्रयम्

...कल्पः स्वस्थचित्तेऽपि गिरिजे ! नैव कल्पना । यद्येवं कुपिताभीरु ! त्वन्तवाहन्नवैपुनः

...र्मवादी भविष्यामि जहि कोपं शुचिस्मिते ! । शिरसा प्रणतश्चाहं रचितस्ते मयाञ्जलिः

...हेनाप्यवमातेन निन्दितेनैव विक्रियाम् । तस्मान्न यातु रुष्टस्य नर्मस्पृष्टो जनः किल

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अनेकैः स्वादुभिर्देवी देवेन प्रतिबोधिता । कोपन्तीव्रन्न तत्याज सती मर्मणि घ
अवष्टब्धमथास्फाल्य वासः शङ्करपाणिना । विपर्यस्तालका वेगाद्यातुमैच्छत शैलजा
तस्या व्रजन्त्याः कोपेन पुनराह पुरान्तकः । सत्यं सर्वैरवयवैः सुतासि सदृशी पि
हिमाचलस्य शृङ्गैस्तैर्मेघजालाकुलैर्नभः । तथा दुरवगाह्येभ्यो हृदयेभ्यस्तवाशयः
काठिन्याङ्गस्त्वमस्मभ्यं वनेभ्यो बहुधागता । कुटिलत्वञ्च वर्त्मभ्यो दुःसेव्यत्वं हिमा
संक्रान्तिं सर्वदैवेति तन्वङ्गि ! हिमशैलराट् । इत्युक्ता सा पुनः प्राह गिरिशं शैलजा

कोपकम्पितमूर्द्धा च प्रस्फुरद्दशनच्छदा ।

उमोवाच ।

मा सर्वान्दोषदानेन निन्दान्यान् गुणिनोजनान् ॥ २१ ॥

तवापिदुष्टसम्पर्कात् संक्रान्तंसर्वमेवहि । व्यालेभ्योऽधिकजिह्वत्वं भस्मनास्नेहव
हृत्कालुष्यं शशाङ्कात्तु दुर्बोधित्वं वृषादपि । तथा बहु किमुक्तेन अलं वाचा श्रमे
श्मशानवासान्निर्भीत्वं नग्नत्वान्न तवत्रपा । निर्घृणत्वं कपालित्वाद्दया तेविगता
इत्युक्त्वामन्दिरात्तस्मान्निर्जगामहिमाद्रिजा । तस्यांव्रजन्त्यांदेवेशगणैःकिलकिलो
क मातर्गच्छसित्यक्त्वारुदन्तोधाविताःपुनः । विष्टभ्य चरणौदेव्यावीरकोबाष्पगद्
प्रोवाचमातः! किन्त्वेतत्क्वासिकुपितान्तरा । अहंत्वामनुयास्यामिव्रजन्तींस्नेहवर्जि
सोऽहं पतिष्ये शिखरात्तपोनिष्ठे त्वयोज्झितः । उन्नाम्य वदनं देवी दक्षिणेनतुपा
उवाच वीरकं माता माशोकं पुत्र ! भावय । शैलाग्रात् पतितुं नैव नचागन्तुं मया
युक्तन्तेपुत्र ! वक्ष्यामि येनकार्येणतच्छृणु । कृष्णेत्युक्त्वाहरेणाहंनिन्दितावाप्यनि
साहं तपःकरिष्यामियेन गौरीत्वमाप्नुयात् । एष स्त्रीलम्पटोदेवो यातायां मय्यनन्त
द्वाररक्षा त्वयाकार्य्यानित्यं रन्ध्रान्ववेक्षिणा । यथानकाचित्प्रविशेद्योषिदत्रहरान्ति
दृष्ट्वा परस्त्रियश्चात्र वदेथा मम पुत्रक ! । शीघ्रमेव करिष्यामि यथायुक्तमनन्तरम्
एवमस्त्विति देवीं स वीरकः प्राह साम्प्रतम् । मातुराज्ञामृताह्लादप्लाविताङ्गो गत

जगाम कक्ष्यां संद्रष्टुं प्रणिपत्य च मातरम् ॥ ३४ ॥

इति श्रीमत्स्यपुराणे पार्वतीवनगमनं नाम चतुःपञ्चाशदधिकशततमोऽध्यायः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# पञ्चपञ्चाशदधिकशततमोऽध्यायः

## पार्वतीतपश्चर्यावर्णनम् ।

सूत उवाच ।

...तीं सापश्यदायान्तीं सतीं मातुर्विभूषिताम् । कुसुमामोदिनीं नाम तस्यशैलस्यदेवताम्
...पि दृष्ट्वागिरिसुतां स्नेहविक्लवमानसा । क पुत्रि ! गच्छसीत्युच्चैरालिङ्ग्योवाचदेवता
...त्रास्यैसर्वमाचख्यौशङ्करात् कोपकारणम् । पुनश्चोवाचगिरिजादेवतांमातृसम्मताम्

उमोवाच ।

...त्यं शैलाधिराजस्य देवता त्वमनिन्दिते ! । सर्वतः सन्निधानन्तेमम चातीववत्सला
...स्तु ते प्रवक्ष्यामि यद्विधेयं तदाधिया । अन्यस्त्रीसंप्रवेशस्तु त्वया रक्ष्यः प्रयत्नतः
...त्र प्रयत्नेन चेतसा सततं गिरौ । पिनाकिनः प्रविष्टायां वक्तव्यं मे त्वयाऽनघे !॥
...ऽहं संविधास्यामियत्कृत्यंतदनन्तरम् । इत्युक्त्वासा तथेत्युक्त्वाजगामस्वगिरिंशुभम्
...पि पितुरुद्यानं जगामाद्रिसुता द्रुतम् । अन्तरिक्षं समाविश्य मेघमालामिव प्रभा ॥
...नि विभूषणान्यस्य वृक्षवल्कलधारिणी । ग्रीष्मे पञ्चाग्निसन्तप्ता वर्षासु च जलोषिता

वन्याहारा निराहारा शुष्का स्थण्डिलशायिनी ।
एवं साधयती तत्र तपसा संव्यवस्थिता ॥ १० ॥

...त्वा तु त्वां गिरिसुतां दैत्यस्तत्रान्तरेवशी । अन्धकस्य सुतो दृप्तः पितुर्बधमनुस्मरन्
...सर्वान् विजित्याजौ वकत्राता रणोत्कटः । आडिर्नामान्तरप्रेक्षी सततंचन्द्रमौलिनः
...जगामामररिपुः पुरन्त्रिपुरघातिनः । स तत्रागत्य ददृशे वीरकं द्वार्यवस्थितम् ॥१३॥
...चिन्त्यासीद्वरं दत्तं स पुरा पद्मजन्मना । हते तदान्धके दैत्ये गिरिशेनामरद्विषि॥१४
...श्चकार विपुलं तपः परमदारुणम् । तमागत्याब्रवीद् ब्रह्मा तपसा परितोषितः ॥
...माडे ! दानवश्रेष्ठ ! तपसा प्राप्तुमिच्छसि । ब्रह्माणमाह दैत्यस्तु निर्मृत्युत्वमहं वृणे

ब्रह्मोवाच ।

...कश्चिद्विनामृत्युंनरोदानव ! विद्यते । यतस्ततोऽपिदैत्येन्द्र ! मृत्युःप्राप्यःशरीरिणा

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्युक्तो दैत्यसिंहस्तु प्रोवाचाम्बुजसम्भवम्। रूपस्यपरिवर्तो मे यदास्यात्पद्मसम्भव।
तदा मृत्युर्मम भवेदन्यथात्वमरोह्यहम्। इत्युक्तस्तु तदोवाच तुष्टः कमलसम्भवः।
यदा द्वितीयो रूपस्य विवर्तस्ते भविष्यति। तदा ते भविता मृत्युरन्यथा न भविष्यति।
इत्युक्तोऽमरतां मेने दैत्यसूनुर्महाबलः। तस्मिन् काले तु संस्मृत्य तद्वधोपायमात्मनः।
परिहर्तुं दृष्टिपथं वीरकस्याभवत्तदा। भुजङ्गरूपी रन्ध्रेण प्रविवेश दृशः पथम्॥
परिहृत्य गणेशस्य दानवोऽसौ सुदुर्जयः। अलक्षितो गणेशेन प्रविष्टोऽथ पुरान्तकम्।
भुजङ्गरूपं सन्त्यज्य बभूवाथ महासुरः। उमारूपी छलयितुं गिरिशं मूढचेतनः॥
कृत्वा मायान्ततोरूपमप्रतर्क्यमनोहरम्। सर्वावयवसंपूर्णं सर्वाभिज्ञानसंवृतम्॥
कृत्वामुखान्तरेदन्तान्दैत्योवज्रोपमान्दृढान्। तीक्ष्णाग्रान् बुद्धिमोहेनगिरिशंहन्तुमुद्यतः।
कृत्वोमारूपसंस्थानं गतो दैत्यो हरान्तिकम्। पापोरम्याकृतिश्चित्रभूषणाम्बरभूषितः।
तं दृष्ट्वा गिरिशस्तुष्टस्तदालिङ्ग्य महासुरम्। मन्यमानो गिरिसुतां सर्वैरवयवान्तरैः।
अपृच्छत् साधुतेभावोगिरिपुत्रि! न कृत्रिमः। यात्वं मदाशयं ज्ञात्वाप्राप्तेहवरवर्णिनि।
त्वया विरहितं शून्यं मन्यमानो जगत्त्रयम्। प्राप्ता प्रसन्नवदना युक्तमेवं विधन्त्वयि।
इत्युक्तो दानवेन्द्रस्तु तदा भाषत् स्मयंश्छनैः। नचाबुद्धयदभिज्ञानं प्रायस्त्रिपुरघातिनः।

देव्युवाच।

यातास्म्यहं तपश्चर्तुं बलम्यायतवातुलम्। रतिश्च तत्र मेनाभूत्ततः प्राप्ता त्वदन्तिकम्।
इत्युक्तः शङ्करः शङ्कां काञ्चित् प्राप्यावधारयत्। हृदयेन समाधाय देवः प्रहसिताननः।
कुपिता मयि तन्वङ्गी प्रकृत्या च दृढव्रता। अप्राप्तकामा संप्राप्ता किमेतत् संशयो मम।
इति चिन्त्य हरस्तस्या अभिज्ञानं विधारयन्। नापश्यद्वामपार्श्वे तु तदङ्गे पद्मलक्षणम्।
लोमावर्तन्तु रचितं ततो देवः पिनाकधृक्। अबुध्यद्दानवीमायामाकारं गूहयंस्ततः।
मेढ्रे वज्रास्त्रमादाय दानवं तमशातयत्। अबुध्यद्वीरकोनैव दानवेन्द्रं निषूदितम्।
हरेण सूदितं दृष्ट्वा स्त्रीरूपं दानवेश्वरम्। अपरिच्छिन्नतत्त्वार्था शैलपुत्र्यै न्यवेदयत्।
दूतेन मारुतेनाशुगामिना नगदेवता। श्रुत्वा वायुमुखाद्देवी क्रोधरक्तविलोचना।
अशपद्वीरकं पुत्रं हृदयेन विदूयता॥ ३६॥

इति श्रीमत्स्यपुराणे आडिदैत्यवधवर्णनं नाम पञ्चपञ्चाशदधिकशततमोऽध्यायः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# षट्पञ्चाशदधिकशततमोऽध्यायः

## पार्वतीम्प्रति ब्रह्मवरदानम् ।

देव्युवाच ।

...रं मां परित्यज्य यस्मात्त्वं स्नेहविक्लवात् । विहितावसरः स्त्रीणां शङ्करस्यरहोविधौ
...माते पुरुषा रूक्षा जडा हृदयवर्जिता । गणेशक्षारसदृशी शिला माता भविष्यति ॥२॥
...मित्तमेतद्विख्यातं वीरकस्य शिलोदये । सोऽभवत्प्रक्रमेणैव विचित्राख्यानसंशयः ॥

एवमुत्सृष्टशापाया गिरिपुत्र्यस्त्वनन्तरम् ।
निर्जगाम मुखात् क्रोधः सिंहरूपी महाबलः ॥ ४ ॥

...सिंहः करालास्यो जटाजटिलकन्धरः । प्रोद्धूतलम्बलाङ्गूलो दंष्ट्रोत्कटमुखातटः
...वृतास्यो ललज्जिह्वः क्षामकुक्षिः शिरादिषु । तस्याशुवर्तितुं देवी व्यवस्यत सतीतदा
...त्वा मनोगतं तस्या भगवांश्चतुराननः । आगम्योवाच देवेशो गिरिजां स्पष्टया गिरा

ब्रह्मोवाच ।

किं पुत्रि ! प्राप्तुकामासि किमलभ्यं ददामि ते ॥ ८ ॥

...म्यतामति क्लेशात्तपसोऽस्मान्मदाज्ञया । तच्छ्रुत्वोवाच गिरिजा गुरुङ्गौरवगर्भितम्

वाक्यं वाचा चिरोद्गीर्णवर्णनिर्णीतवाञ्छितम् ।

देव्युवाच ।

तपसा दुष्करेणाप्तः पतित्वे शङ्करो मया ॥ १० ॥

...मां श्यामलवर्णेति वहुशःप्रोक्तवान् भवः । स्यामहं काञ्चनाकारा वाल्लभ्येनच संयुता
...र्भूतपतेरङ्गमेकतो निर्विशेऽङ्कवत् । तस्यास्तद्भाषितं श्रुत्वा प्रोवाच कमलासनः ॥
...मेव त्वं भूयश्च भर्तृदेहार्द्धधारिणी । ततस्तस्याजभृङ्गाङ्गं फुल्लनीलोत्पलत्वचम् ॥
...या सा चाभवद्दीप्ता घण्टाहस्ताविलोचना । नानाभरणपूर्णाङ्गी पीतकौशेयधारिणी
...मब्रवीत्ततो ब्रह्मा देवीं नीलाम्बुजत्विषम् । निशे भूधरजा देहसम्पर्कात्त्वं ममाज्ञया ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सम्प्राप्ता कृतकृत्यत्वमेकानंशापुराह्यसि । य एव सिंहः प्रोद्भूतो देव्याः क्रोधाद्वरा
स तेऽस्तु वाहनं देवि ! केतौ चस्तु महाबलः ।
गच्छ विन्ध्याचलं तत्र सुरकार्यं करिष्यसि ॥ १७ ॥
पञ्चालो नाम यक्षोऽयं यक्षलक्षपदानुगः । दत्तस्ते किङ्करो देवि ! मया मायाशतैर्
इत्युक्ता कौशिकी देवी विन्ध्यशैलं जगाम ह ।
उमापि प्राप्तसङ्कल्पा जगाम गिरिशान्तिकम् ॥ १९ ॥
प्रविशन्तीति तां द्वारि ह्यपकृष्य समाहितः । रुरोध वीरको देवीं हेमवेत्रलताधर
तामुवाच च कोपेन रूपात्तु व्यभिचारिणीम् ।
प्रयोजनं न तेऽस्तीह गच्छ यावन्न भेस्त्यसि ॥ २१ ॥
देव्या रूपधरो दैत्यो देवं वञ्चयितुं त्विह ।
प्रविष्टो न च दृष्टोऽसौ स वै देवेन घातितः ॥२२॥
घातिते चाहमाज्ञप्तो नीलकण्ठेन कोपिना । द्वारेषु नावधानं ते यस्मात् पश्यामि
भविष्यसि नमद्द्वारस्थोव र्षपूगान्यनेकशः । अतस्तेऽत्र न दास्यामिप्रवेशंगम्यतां
इति श्री मत्स्यपुराणे पार्वतीम्प्रति ब्रह्मवरदानं नाम षट्पञ्चाशदधिकशततमोऽध्याय

---

## सप्तपञ्चाशदधिकशततमोऽध्यायः

### वीरक पार्वती संवादः ।

वीरक उवाच ।

'एवमुक्त्वा गिरिसुता माता मे स्नेहवत्सला ।
'प्रवेशं लभते नान्या नारी कमललोचने ॥१॥
'इत्युक्ता तु तदा देवी चिन्तयामास चेतसा ।
न सा नारीति दैत्योऽसौ वायुर्मे याममाषत ॥२॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

...व वीरकः शप्तो मया क्रोधपरीतया । अकार्यं क्रियते मूढैः प्रायः क्रोधसमीरितैः
क्रोधेन नश्यते कीर्तिः क्रोधो हन्ति स्थिरां श्रियम् ।
अपरिच्छिन्नतत्वार्था पुत्रं शापितवत्यहम् ॥४॥
...परीतार्थबुद्धीनां सुलभो विपदोदयः । सञ्चिन्त्यैवमुवाचेदं वीरकं प्रति शैलजा ॥
लज्जासज्जविकारेण वदनेनाम्बुजत्विषा ।

देव्युवाच ।

अहं वीरक ! ते माता मा तेऽस्तु मनसो भ्रमः ।
...स्यास्मि दयिता सुता तु हिमभूभृतः । मम गात्रच्छविभ्रान्त्यामाशङ्कांपुत्र ! भावय
...गौरता दत्ता ममेयं पद्मजन्मना । मया शप्तोऽस्य विदिते वृत्तान्ते दैत्यनिर्मिते ॥
...ला नारीप्रवेशन्तु शङ्करे रहसि स्थिते । न निवर्तयितुं शक्यः शापः किन्तु ब्रवीमिते
...मेष्यसि मानुष्यात् स त्वं कामसमन्वितः । शिरसा तु ततोवन्द्यमातरंपूर्णमानसः
उवाचार्चितपूर्णेन्दुद्युतिश्च हिमशैलजाम् ॥ १० ॥

वीरक उवाच ।

नतसुरासुरमौलिमिलन्मणिप्रचयकान्तिकरालनखाङ्किते ।
नगसुते ! शरणागतवत्सले ! तव नतोऽस्मि नतार्त्तिविनाशिनि ॥११॥
तपनमण्डलमण्डितकन्धरे ! पृथुसुवर्णसुवर्णनगद्युते ।
विषभुजङ्गनिषङ्गविभूषिते ! गिरिसुते ! भवतीमहमाश्रये ॥१२॥
जगति कः प्रणताभिमतन्ददौ झटिति सिद्धनुते भवती यथा ।
जगति काञ्च न वाञ्छति शङ्करो भुवनधृत्तनये ! भवतीं यथा ॥१३॥
विमलयोगविनिर्मितदुर्जयस्वतनुतुल्यमहेश्वरमण्डले ।
विदलितान्धकबान्धवसंहतिः सुरवरैः प्रथमन्त्वमभिष्टुता ॥१४॥
सितसटापटलोद्धतकन्धराभरमहामृगराजरथास्थिता ।
विमलशक्तिमुखानलपिङ्गलायतभुजौघविपिष्टमहासुरा ॥१५॥
निगदिता भुवनैरिति चण्डिका जननि ! शुम्भनिशुम्भनिषूदनी ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रणतचिन्तितदानवदानवप्रमथनैकरतिस्तरसा भुवि ॥१६॥

वियति वायुपथे ज्वलनोज्ज्वलेऽवनितले तव देवि ! च यद्वपुः ।

तदजितेऽप्रतिमे प्रणमाम्यहं भुवनभाविनि ! ते भववल्लभे ॥१७॥

जलधयो ललितोद्धतवीचयो हुतवहद्युतयश्च चराचरम् ।

फणसहस्रभृतश्च भुजङ्गमास्त्वदभिधास्यति मय्यभयङ्कराः ॥१८॥

भगवति ! स्थिरभक्तजनाश्रये ! प्रतिगतो भवतीचरणाश्रयम् ।

करणजातमिहास्तु ममाचलन्नुतिलवाप्तिफलाशयहेतुतः ॥

प्रशममेहि ममात्मजवत्सले ! नमोऽस्तु ते देवि ! जगत्त्रयाश्रये ! ॥१९

## सूत उवाच ।

प्रसन्ना तु ततो देवी वीरकस्येति संस्तुता । प्रविवेश शुभं भर्तुर्भवनं भूधरात्मजा ॥

द्वारस्थो वीरको देवान् हरदर्शनकाङ्क्षिणः । व्यसर्जयत् स्वान्येव गृहाण्यादरपूर्व

नास्त्यत्रावसरो देवा देव्यासह वृषाकपिः । निभृतः क्रीड़तीत्युक्ता ययुस्तेवयथाग

गते वर्षसहस्रे तु देवास्त्वरितमानसाः । ज्वलनं चोदयामासुर्ज्ञातुं शङ्करचेष्टितम् ॥

प्रविश्य जालरन्ध्रेण शुकरूपी हुताशनः । ददृशे नयने शर्वं रतं गिरिजया सह ॥

ददृशे तञ्च देवेशो हुताशं शुकरूपिणम् । तमुवाच महादेवः किञ्चित् कोपसमन्वित

यस्मात्तु त्वत्कृतो विघ्नस्तस्मात्त्वय्युगपद्यते । इत्युक्तः प्राञ्जलिर्वह्निरपिबद्वीर्यमाहित

तेनापूर्यत तान्देवांस्तत्तत्कायविभेदतः । विपाट्य जठरन्तेषां वीर्यं माहेश्वरन्ततः

निष्क्रान्तं तप्तहेमाभं वितते शङ्कराश्रमे । तस्मिन् सरो महज्जातं विमलं बहुयोजन

प्रोत्फुल्लहेमकमलं नानाविहगनादितम् । तच्छ्रुत्वा तु ततो देवी हेमद्रुममहाजल

तत्र कृत्वा जलक्रीड़ां तदब्जकृतशेखरा । उपविष्टा ततस्तस्य तीरे देवी सखीयुता

पातुकामा च तत्तोयंस्वादुनिर्मलपङ्कजम् । अपश्यन् कृत्तिकाःस्नाताःषडर्कद्युतिसन्नि

पद्मपत्रे तु तद्वारि गृहत्वोपस्थिता गृहम् । हर्षादुवाच पश्यामि पद्मपत्रे स्थितं पय

ततस्ता ऊचुरखिलं कृत्तिका हिमशैलजम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कृत्तिका ऊचुः ।

दास्यामो यदि ते गर्भः सम्भूतो यो भविष्यति ॥३२॥
सोऽस्माकमपि पुत्रः स्यादस्मन्नाम्नाचवर्तताम् । भवेल्लोकेषु विख्यातःसर्वेष्वपिशुभानने !
तुकोवाच गिरिजा कथं मद्गात्रसम्भवः । सर्वैरवयवैर्युक्तो भवतीभ्यः सुतोभवेत् ॥
स्तां कृत्तिकाऊचुर्विधास्यामोऽस्यवैवयम् । उत्तमान्युत्तमाङ्गानि यद्येवन्तुभविष्यति
वै शैलजा प्राह भवत्वेवमनिन्दिताः । ततस्ताहर्षसम्पूर्णाः पद्मपत्रस्थितं पयः ॥
यैदुस्तयाचापितत्पीतं क्रमशो जलम् । पीते तु सलिले तस्मिंस्ततस्तस्मिन्सरोवरे
स्य देव्याश्च ततो दक्षिणांकुक्षिमुद्गतः । निश्चक्रामाद्भुतोबालः सर्वलोकविभासकः
कप्रभाकारः प्रकाशकनकप्रभः । गृहीतनिर्मलोदग्रशक्तिशूलः षडाननः ॥ ४० ॥
दीप्तो मारयितुं दैत्यान् कुत्सितान् कनकच्छविः ।
एतस्मात् कारणाद्देवः कुमारश्चापि सोऽभवत् ॥ ४१ ॥

इति श्रीमत्स्यपुराणे कुमारप्रादुर्भाववर्णनं नाम सप्तपञ्चाशदधिकशततमोऽध्यायः ।

---

# अष्टपञ्चाशदधिकशततमोऽध्यायः

## कुमारोत्पत्तिवर्णनम् देवकृतकुमारस्तुतिश्च ।

सूत उवाच ।

वामं विदार्य निष्क्रान्तः सुतो देव्याः पुनः शिशुः ।
स्कन्दाच्च वदने वह्नेः शुक्रात् सुवदनोऽरिहा ॥ १ ॥
त्तिकामेलनाद्देवशाखाभिःसविशेषतः । शाखाभिधाःसमाख्याताःषट्सुवक्त्रेषुविस्तृताः
यतस्ततो विशाखोऽसौ ख्यातो लोकेषु षण्मुखः ।
स्कन्दो विशाखः षड्वक्त्रो कार्त्तिकेयश्च विश्रुतः ॥ ३ ॥
बहुले पक्षे पञ्चदश्यां महाबलौ । संभूतावर्कसदृशौ विशाले शरकानने ॥ ४ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चैत्रस्यैव सिते पक्षे पञ्चम्यां पाकशासनः। बालकाभ्याश्चकारैकं मत्वा चामरभूते
तस्यामेव ततःषष्ठ्यामभिषिक्तो गुहः प्रभुः। सर्वैरमरसङ्घातैर्ब्रह्मेन्द्रोपेन्द्रभास्करैः।
गन्धमाल्यैः शुभैर्धूपैस्तथा क्रीडनकैरपि। छत्रैश्चामरजालैश्च भूषणैश्च विलेपनैः ॥
अभ्यर्चितो विधानेन यथावत्षण्मुखः प्रभुः। सुतामस्मै ददौ शक्रो देवसेनेति विश्रु
पत्न्यर्थं देवदेवस्य ददौ विष्णुस्तदायुधान्। यक्षाणां दशलक्षाणि ददावस्मै धना
ददौ हुताशनस्तेजो ददौ वायुश्च वाहनम्। ददौ क्रीडनकन्त्वष्टा कुक्कुटं कामरूपि
एवं सुरास्तु ते सर्वे परिवारमनुत्तमम्। ददुर्मुदितचेतस्काः स्कन्दायादित्यवर्चसे।
जानुभ्यामवनौ स्थित्वा सुरसङ्घास्तमस्तुवन्। स्तोत्रेणानेन वरदं षण्मुखं मुख्यशः

देवा ऊचुः।

नमः कुमाराय महाप्रभाय स्कन्दाय च स्कन्दितदानवाय।
नवार्कविद्युद्द्युतये नमोऽस्तु नमोऽस्तु ते षण्मुख कामरूप !! ॥ १३ ॥
पिनद्धनानाभरणाय भर्त्रे नमो रणे दारुणदारुणाय।
नमोऽस्तु तेऽर्कप्रतिमप्रभाय नमोऽस्तु गुह्याय गुहाय तुभ्यम् ॥ १४ ॥
नमोऽस्तु त्रैलोक्यभयापहाय नमोऽस्तु ते बालकृपापराय।
नमो विशालामललोचनाय नमो विशाखाय महाव्रताय ॥ १५ ॥
नमो नमस्तेऽस्तु मनोहराय नमो नमस्तेऽस्तु रणोत्कटाय।
नमो मयूरोज्ज्वलवाहनाय नमोऽस्तु केयूरधराय तुभ्यम् ॥ १६ ॥
नमो धृतोदग्रपताकिने नमो नमः प्रभावप्रणताय तेऽस्तु।
नमो नमस्ते वरवीर्यशालिने क्रियापराणां भवभव्यमूर्तये ॥ १७ ॥
क्रियापरा यज्ञपतिश्च स्तुत्वा विरेमुरेव त्वमराधिपाद्याः।
एवं तदा षड्वदनन्तु सेन्द्रा मुदा सुतुष्टश्च गुहस्ततस्तान्।
निरीक्ष्य नेत्रैरमरैः सुरेशान् शत्रून् हनिष्यामि गतज्वराःस्थ ॥ १८ ॥

कुमार उवाच।

कं वः कामं प्रयच्छामि देवता ! ब्रूत निर्वृताः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यद्यप्यसाध्यं हृद्यं वो हृदये चिन्तितम्परम् ॥ १६ ॥

...त्युक्तास्तु सुरास्तेन स्तुत्वा प्रणतमौलयः । सर्वएव महात्मानं गुहं तद्गतमानसाः ॥

...दैत्येन्द्रस्तारकोनाम सर्वामरकुलान्तकृत् । वलवान् दुर्जयोदुष्टो दुराचारोऽतिकोपनः ॥

...व जहि हृद्योऽर्थं एषोऽस्माकं भयापह । एवमुक्तस्तथेत्युक्त्वा सर्वामरपदानुगः ॥

...याम जगतां नाथ स्तूयमानोऽमरेश्वरैः । तारकस्य वधार्थाय जगतः कण्टकस्य वै ॥

...थ प्रेषयामास शक्रोलब्धसमाश्रयः । दूतं दानवसिंहस्य परुषाक्षरवादिनम् ॥ २४ ॥

स तु गत्वाब्रवोद्दैत्यं निर्भयो भीमदर्शनः ।

दूत उवाच ।

शक्रस्त्वामाह देवेशो दैत्यकेतो ! दिवस्पतिः ॥ २५ ॥

तारकासुर ! तच्छ्रुत्वा घट शक्त्या यथेच्छया ।

यज्जगद्दलनादाप्तं किल्विषं दानव ! त्वया ॥ २६ ॥

...थाहं शासकस्तेऽद्य राजास्मि भुवनत्रये । श्रुत्वैतद्दूतवचनं कोपसंरक्तलोचनः ॥२७

उवाच दूतं दुष्टात्मा नष्टप्रायविभूतिकः ।

तारक उवाच ।

दृष्टं ते पौरुषं शक्र ! रणेषु शतशो मया ॥ २८ ॥

...त्रपत्वान्न ते लज्जा विद्यते शक्र ! दुर्मते ! । एवमुक्ते गते दूते चिन्तयामास दानवः

...ब्धसंश्रयःशक्रोवक्तुमेवं हि चार्हति । जितः स शक्रो नोऽकस्माज्जायतेसंश्रयाश्रयः

...मित्तानि च दुष्टानि सोऽपश्यद्दुष्टचेष्टितः । पांसुवर्षमसृक्पातं गगनादवनीतले ॥

...नेत्रप्रकम्पं च वक्त्रशोषं मनोभ्रमम् । स्वकान्तावक्त्रपद्मानांम्लानताश्चव्यलोकयत्

दुष्टांश्च प्राणिनो रौद्रान् सोऽपश्यद् दुष्टवेदिनः ।

तदचिन्त्यैव दितिजो न्यस्तचिन्तोऽभवत् क्षणात् ॥ ३३ ॥

...वृन्दजघटाघण्टारणत्काररवोत्कटाम् । तद्वत्तुरगसङ्घातक्षुण्णभूरेणुपिञ्जराम् ॥ ३४ ॥

...चलस्यन्दनोदग्रध्वजराजिविराजिताम् । विमानैश्चाद्भुताकारैश्चलितामरचामरैः ॥३५॥

...भूषणनिबद्धाश्च किन्नरोद्गीतनादिताम् । नानानाकतरूत्फुल्लकुसुमापीडधारिणीम् ॥



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विकोशास्त्रपरिष्कारांवर्म्मनिर्म्मलदर्शनाम् । वन्द्युद्घुष्टस्तुतिरवां नानावाद्यनिनादिताम्

सेनां नाकसदां दैत्यः प्रासादस्थो व्यलोकयत् ।

चिन्तयामास स तदा किंचिदुद्भ्रान्तमानसः ॥ ३८ ॥

अपूर्वः को भवेद्योद्धा यो मया न विनिर्जितः । ततश्चिन्ताकुलोदैत्यसुश्रावकटुकाक्षरा

सिद्धवन्दिभिरुद्घुष्टमिदं हृदयदारणम् ।

अथ गाथा ।

जय अतुलशक्तिदीधितिपिञ्जर !

भुजदण्डचण्डरभस ! सुखद ! कुमुदकाननविकासनेन्दो !

कुमार ! जय दितिजकुलमहोदधिवडवानल ! ॥ ४० ॥

षण्मुख ! मधुररवमयूररथ ! सुरमुकुटकोटिघट्टितचरणनखाङ्कुरमहासन !

जय ललितचूडाकलापनवविमलदल ! कमलकान्त ! दैत्यवंशदुःसहदावानल !

जय विशाख ! विभो ! जय सकललोकतारक !। स्कन्द ! जय गौरीनन्दन ! घण्टा

प्रिय ! विशाख ! विभो ! धृतपताकप्रकीर्णपटल !। कनकभूषणभासुरदिनकरच्छाय !

जय जनितसंभ्रमलीलालूनाखिलाराते !

जय सकललोकतारक ! दितिजासुरवरतारकान्तक ! ।

स्कन्द ! जय बाल ! सप्तवासर ! जय भुवनावलिशोकविनाशन ! ॥ ४३ ॥

इति श्रीमत्स्यमहापुराणे कुमारस्तुतिर्नामाष्टपञ्चाशदधिकशततमोऽध्यायः ।

---

## ऊनषष्ट्यधिकशततमोऽध्यायः

### तारकोपाख्यानम् ।

सूत उवाच ।

श्रुत्वैतत्तारकः सर्वमुद्घुष्टं देववन्दिभिः । सस्मार ब्रह्मणोवाक्यं वधं बालादुपस्थितम्

स्मृत्वा धर्मं ह्यवर्माङ्गः पदातिरपदानुगः । मन्दिरान्निर्जगामाशु शोकग्रस्तेन चेतसा

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

...नेमिमुखा दैत्याः संरम्भाद्भ्रान्तचेतसः। योधा! धावतगृह्णीतयोजयध्वंवरूथिनीम्
कुमारं तारको दृष्ट्वा बभाषे भीषणाकृतिः।
किं बाल! योद्धुकामोऽसि क्रीड कन्दुकलीलया ॥ ४ ॥
...या न दानवा दृष्टा यत् सङ्गरविभीषकाः। बालत्वादथ ते बुद्धिरेवं स्वल्पार्थदर्शिनी॥
...मारोऽपि तमग्रस्थं बभाषे हर्षयन् सुरान्। शृणु तारक! शास्त्रार्थस्तवचैव निरूप्यते
...र्था न दृश्यन्ते समये निर्भये भटैः। शिशुत्वं मावमंस्था मे शिशुःकालभुजङ्गमः॥
दुष्प्रेक्ष्यो भास्करो बालस्तथाहं दुर्जयः शिशुः।
अल्पाक्षरो न मन्त्रः किं सुस्फुरो दैत्य! दृश्यते ॥ ८ ॥
...मारे प्रोक्तवत्येवं दैत्यश्चिक्षेप मुद्गरम्। कुमारस्तं निरस्याथ वज्रेणामोघवर्चसा॥
...क्षिक्षेप दैत्येन्द्रो भिन्दिपालमयोमयम्। करेण तच्च जग्राह कार्तिकेयोऽमरारिहा॥
गदां मुमोच दैत्याय षण्मुखोऽपि खरस्वनाम्।
तया हतस्ततो दैत्यश्चकम्पेऽचलराडिव ॥ ११ ॥
...च दुर्जयं दैत्यस्तदा षड्वदनं रणे। चिन्तयामास बुद्ध्या वै प्राप्तः कालोनसंशयः
...तन्तु तमालोक्य कालनेमिपुरोगमाः। सर्वे दैत्येश्वरा जघ्नुः कुमारं रणदारुणम्॥
स तैः प्रहारैरस्पृष्टो वृथाक्लेशो महाद्युतिः।
रणशौण्डास्तु दैत्येन्द्राः पुनः प्रासैः शिलीमुखैः ॥ १४ ॥
...मारं सामरञ्जघ्नुर्बलिनो देवकण्टकाः। कुमारस्य व्यथा नाभूद्दैत्यास्त्रनिहतस्य तु॥
...न्तकरणो जातो देवानां दानवाहवः। देवान्निपीडितान्दृष्ट्वाकुमारःकोपमाविशत्
...ऽस्त्रैर्वारयामास दानवानामनीकिनीम्। तैरस्त्रैर्निष्प्रतीकारैस्ताडिताःसुरकण्टकाः
...नेमिमुखाः सर्वे रणादासन् पराङ्मुखाः। विद्रुतेष्वथ दैत्येषु हतेषु च समन्ततः॥
ततः क्रुद्धो महादैत्यस्तारकोऽसुरनायकः।
जग्राह च गदां दिव्यां हेमजालपरिष्कृताम् ॥ १६ ॥
...ने कुमारं गदया निष्टप्तकनकाङ्गदः। शरैर्मयूरं चित्रैश्च चकार विमुखं रणे ॥२०॥
...पराङ्मुखं देवो गुहस्त्वस्य स्ववाहनम्। जग्राह शक्तिं विमलां रणे कनकभूषणाम्॥

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

बाहुना हेमकेयूररुचिरेण षडाननः । ततो जघान्महासेनस्तारकं दानवाधिपम् ॥ २२

तिष्ठ तिष्ठ सुदुर्बुद्धे! जीवलोकं विलोकय ।
हतोऽस्यद्य मया शक्त्या स्मर शस्त्रं सुशिक्षितम् ॥ २३ ॥
इत्युक्त्वा च ततः शक्तिं मुमोच दितिजम्प्रति ।
सा कुमारभुजोत्सृष्टा तत्केयूररवानुगा ॥ २४ ॥

विभेद दैत्यहृदयं वज्रशैलेन्द्रकर्कशम् । गतासुः स पपातोर्व्यां प्रलये भूधरो यथा

विकीर्णमुकुटोष्णीषो विस्रस्ताखिलभूषणः ।
तस्मिन् विनिहते दैत्ये त्रिदशानां महोत्सवे ॥ २६ ॥
नाभूत् कश्चित्तदा दुःखी नरकेष्वपि पापकृत् ।
स्तुवन्तः षण्मुखं देवाः क्रीडन्तश्चाङ्गनायुताः ॥ २७ ॥

जग्मुः स्वानेव भवनान् भूरिधामान उत्सुकाः । ददुश्चापिवरं सर्वे देवाःस्कन्दमुखं

तुष्टाः संप्राप्तसर्वेच्छाः सह सिद्धैस्तपोधनैः ।

देवा ऊचुः ।

यः पठेत् स्कन्दसंबद्धां कथां मर्त्यो महामतिः ॥ २९ ॥
शृणुयाच्छ्रावयेद्वापि स भवेत् कीर्तिमान् नरः ।
बह्वायुः सुभगः श्रीमान् कान्तिमान् शुभदर्शनः ॥ ३० ॥

भूतेभ्यो निर्भयश्चापिसर्वदुःखविवर्जितः । सन्ध्यामुपास्य वै पूर्वां स्कन्दस्य चरितं
स मुक्तः किल्बिषैः सर्वैर्महाधनपतिर्भवेत् । बालानां व्याधिजुष्टानां राजद्वारश्च सेव
इदं तत्परमन्दिव्यं सर्वदा सर्वकामदम् । तनुक्षये च सायुज्यं षण्मुखस्य व्रजेन्नरः

इति श्रीमत्स्यपुराणे स्कन्दविजयपठनफलवर्णनं नामोनषष्ट्यधिकशततमोऽध्यायः

---

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# षष्ट्यधिकशततमोऽध्यायः

## नरसिंहमाहात्म्यवर्णनम् ।

ऋषय ऊचुः ।

इदानीं श्रोतुमिच्छामो हिरण्यकशिपोर्वधम् ।
नरसिंहस्य माहात्म्यं तथा पापविनाशनम् ॥ १ ॥

सूत उवाच ।

कृतयुगे विप्रा हिरण्यकशिपुः प्रभुः । दैत्यानामादिपुरुषश्चकार स महत्तपः ॥ २॥
वर्षसहस्राणि दशवर्षशतानि च । जलवासी समभवत् स्नानमौनधृतव्रतः ॥ ३ ॥
शमदमाभ्याञ्च ब्रह्मचर्येण चैव हि । ब्रह्मा प्रीतोऽभवत्तस्य तपसा नियमेन च ॥४॥
स्वयम्भूर्भगवान् स्वयमागम्य तत्र ह । विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥५॥
दित्यैर्वसुभिः साध्यैर्मरुद्भिर्दैवतैस्तथा । रुद्रैर्विश्वसहायैश्च यक्षराक्षसपन्नगैः ॥ ६ ॥

दिग्भिश्चैव विदिग्भिश्च नदीभिः सागरैस्तथा ।
नक्षत्रैश्च मुहूर्तैश्च खेचरैश्च महाग्रहैः ॥ ७ ॥
देवैर्ब्रह्मर्षिभिः सार्द्धं सिद्धैः सप्तर्षिभिस्तथा ।
राजर्षिभिः पुण्यकृद्भिर्गन्धर्वाप्सरसाङ्गणैः ॥ ८ ॥
चराचरगुरुः श्रीमान् वृतः सर्वैर्दिवौकसैः ।
ब्रह्मा ब्रह्मविदां श्रेष्ठो दैत्यं वचनमब्रवीत् ॥ ९ ॥

तोऽस्मि तव भक्तस्य तपसाऽनेनसुव्रत ! । वरं वरय भद्रं ते यथेष्टं काममाप्नुहि ॥

हिरण्यकशिपुरुवाच ।

देवासुरगन्धर्वा न यक्षोरगराक्षसाः । न मानुषाः पिशाचा वा हन्युर्मान्देवसत्तम !
ऋषयो वा न मां शापैः शपेयुः प्रपितामह । यदि मे भगवान् प्रीतो वर एष वृतोमया
शास्त्रेण न शस्त्रेण गिरिणा पादपेन च । न शुष्केण न चार्द्रेण नदिवा न निशाऽथवा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भवेयमहमेवार्कः सोमोवायुर्हुताशनः। सलिलञ्चान्तरिक्षञ्च नक्षत्राणि दिशो द्
अहं क्रोधश्च कामश्च वरुणो वासवोयमः। धनदश्च धनाध्यक्षो यक्षः किंपुरुषाधि

ब्रह्मोवाच।

एते दिव्या वरास्तात! मया दत्तास्तवाद्भुताः।
सर्वान् कामान् सदा वत्स! प्राप्स्यसे त्वं न संशयः॥ १६॥

एवमुक्त्वा स भगवान् जगामाकाश एव हि। वैराजं ब्रह्मसदनं ब्रह्मर्षिगणसेवित
ततो देवाश्च नागाश्च गन्धर्वा ऋषिभिः सह। वरप्रदानं श्रुत्वैव पितामहमुपस्थित

देवा ऊचुः।

वरप्रदानाद्भगवन्! वधिष्यति स नोऽसुरः।
तत्प्रसीदाशु भगवन्! वधोऽप्यस्य विचिन्त्यताम्॥ १९॥

भगवन्। सर्वभूतानामादिकर्त्ता स्वयं प्रभुः। स्रष्टा त्वं हव्यकव्यानामव्यक्तप्रकृतिर्बु
सर्वलोकहितंवाक्यं श्रुत्वा देवःप्रजापतिः। आश्वासयामास सुरान् सुशीतैर्वचनाम्बु

अवश्यं त्रिदशास्तेन प्राप्तव्यं तपसः फलम्।
तपसोऽन्तेऽस्य भगवान् बधं विष्णुः करिष्यति॥ २२॥
तच्छ्रुत्वा विबुधा वाक्यं सर्वे पङ्कजजन्मनः।
स्वानि स्थानानि दिव्यानि विप्रा जग्मुर्मुदान्विताः॥ २३॥

लब्धमात्रे वरे चाथ सर्वाः सोऽबाधत प्रजाः। हिरण्यकशिपुर्दैत्यो वरदानेन दर्पि
आश्रमेषुमहाभागान् स मुनीन्शंसितव्रतान्। सत्यधर्मपरान् दान्तान् धर्षयामासदा
देवांस्त्रिभुवनस्थांश्च पराजित्य महासुरः। त्रैलोक्यं वशमानीय स्वर्गे वसति दानव
यदा वरमदोत्सिक्तश्चोदितः कालधर्मतः। यज्ञियानकरोद्दैत्यानयज्ञियांश्च देवताः
तदादित्याश्च साध्याश्च विश्वे च वसवस्तथा। सेन्द्रा देवगणायक्षाः सिद्धद्विजमह
शरणं शरणं विष्णुमुपतस्थुर्महाबलम्। देवदेवं यज्ञमयं वासुदेवं सनातनम्॥ २

देवा ऊचुः।

नारायण! महाभाग! देवास्त्वां शरणंगताः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्रायस्व जहि दैत्येन्द्रं हिरण्यकशिपुं प्रभो ! ॥ ३० ॥
त्वं हि नःपरमो धाता त्वं हि न परमो गुरुः। त्वं हि नःपरमोदेवो ब्रह्मादीनां सुरोत्तम

विष्णुरुवाच।

त्यजध्वममरा अभयं वो ददाम्यहम् । तथैव त्रिदिवं देवाः प्रतिपद्यत मा चिरम् ॥
सोऽहं सगणं दैत्यं वरदानेन दर्पितम् । अवध्यममरेन्द्राणां दानवेन्द्रं निहन्म्यहम् ॥३३
एवमुक्त्वा तु भगवान् विसृज्यत्रिदशेश्वरान् । वधं सङ्कल्पयामास हिरण्यकशिपोः प्रभुः
सहायश्च महाबाहुरोङ्कारं गृह्य सत्वरम् । अथोङ्कारसहायस्तु भगवान् विष्णुरव्ययः ॥
हिरण्यकशिपुस्थानं जगाम हरिरीश्वरः । तेजसा भास्कराकारः शशी कान्त्येवचापरः
नरस्य कृत्वार्द्धतनुं सिंहस्यार्द्धतनुं तथा । नारसिंहेन वपुषा पाणिं संस्पृश्य पाणिना ॥

ततोऽपश्यत विस्तीर्णां दिव्यां रम्यां मनोरमाम् ।
सर्वकामयुतां शुभ्रां हिरण्यकशिपोः सभाम् ॥ ३८ ॥

विस्तीर्णां योजनशतं शतमध्यर्द्धमायताम् । वैहायसीङ्कामगमां पञ्चयोजनविस्तृताम् ॥

जराशोकक्लमापेतां निष्प्रकम्पां शिवां सुखाम् ।
वेश्महर्म्यवतीं रम्यां ज्वलन्तीमिव तेजसा ॥ ४० ॥

अन्तःसलिलसंयुक्तां विहितां विश्वकर्म्मणा । दिव्यरत्नमयैर्वृक्षैः फलपुष्पप्रदैर्युताम् ॥
नीलपीतसितश्यामैः कृष्णैर्लोहितकैरपि। अवतानैस्तथा गुल्मैर्मञ्जरीशतधारिभिः ॥४२॥
सिताभ्रघनसङ्काशा प्लवन्तीव व्यदृश्यत । रश्मिवती भास्वरा च दिव्यगन्धमनोरमा ॥

सुसुखा न च दुःखा सा न शीता न च घर्मदा ।
न क्षुत्पिपासे ग्लानिं वा प्राप्यतां प्राप्नुवन्ति ते ॥ ४४ ॥
नानारूपैरुपकृतां विचित्रैरति भास्वरैः ।
स्तम्भैर्न विभृता सा वै शाश्वती चाक्षपा सदा ॥४५॥
सर्वे च कामाः प्रचुरा ये दिव्या ये च मानुषाः ।
रसयुक्तं प्रभूतञ्च भक्ष्यभोज्यमनन्तकम् ॥ ४६ ॥

पुण्यगन्धस्रजश्चात्र नित्यपुष्पफलद्रुमाः । उष्णे शीतानि तोयानि शीतेचोष्णानिसंतिच

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पुष्पिताग्रा महाशाखाः प्रवालाङ्कुरधारिणः । लतावितानसंच्छन्ना नदीषु च सरःसु च
वृक्षान् बहुविधांस्तत्र मृगेन्द्रो ददृशे प्रभुः । गन्धवन्ति च पुष्पाणि रसवन्ति फलानि च
नातिशीतानि नोष्णानि तत्रतत्र सरांसि च । अपश्यत् सर्वतीर्थानि सभायां तस्य सो
नलिनैः पुण्डरीकैश्च शतपत्रैः सुगन्धिभिः । रक्तैः कुवलयैर्नीलैः कुमुदैः संवृतानि च
सुकान्तैर्धार्तराष्ट्रैश्च राजहंसैश्च सुप्रियः । कारण्डवैश्चक्रवाकैः सारसैः कुररैरपि
विमलैः स्फाटिकाभैश्च पाण्डुरैश्च द्नैर्द्विजैः । बहुहंसोपगीतानि सारसाभिरुतानि
गन्धवत्यः शुभास्तत्र पुष्पमञ्जरिधारिणीः । दृष्टवान् पर्वताग्रेषु नागपुष्पधरा लताः
केतक्यशोकसरलाः पुन्नागतिलकार्जुनाः । चूता नीपाः प्रस्थपुष्पाः कदम्बा बकुलाश्च

प्रियङ्गुपाटलावृक्षाः शाल्मल्यः सहरिद्रकाः ।
सालास्तालास्तमालाश्च पञ्चकाश्च मनोरमाः ॥ ५६ ॥
तथैवान्ये व्यराजन्त सभायां पुष्पिता द्रुमाः ।
विद्रुमाश्च द्रुमाश्चैव ज्वलिताग्निसमप्रभाः ॥५७॥

स्कन्धवन्तः सुशाखाश्च बहुतालसमुच्छ्रयाः । अर्जुनाशोकवर्णाश्च बहवश्चित्रका द्रुमाः
वरुणो वत्सनाभश्च पनसाः सह चन्दनैः । नीलाः सुमनसश्चैव निम्बाअश्वत्थतिन्दुकाः
पारिजाताश्च लोध्राश्च मल्लिका भद्रदारवः । आमलक्यस्तथाजम्बुलकुचाः शैलवालुकाः

कालीयकाद्रुकालाश्च हिङ्गवः पारियात्रकाः ।
मन्दारकुन्दलताश्च पतङ्गाः कुटजास्तथा ॥६१॥

रक्ताः कुरण्टकाश्चैव नीलाश्चागरुभिः सह । कदम्बाश्चैव भव्याश्च दाडिमा बीजपूरकाः
सप्तपर्णाश्च बिल्वाश्च मधुपैरावतास्तथा । अशोकाश्च तमालाश्च नानागुल्मलतावृताः
मधूकाः सप्तपर्णाश्च बहवस्तीरगा द्रुमाः । लताश्च विविधाकाराः पत्रपुष्पफलोपगाः
एते चान्ये च बहवस्तत्र काननजा द्रुमाः । नानापुष्पफलोपेता व्यराजन्त समन्ततः

चकोराः शतपत्राश्च मत्तकोकिलसारिकाः ।
पुष्पिताः पुष्पिताग्रैश्च सम्पतन्ति महाद्रुमाः ॥६६॥

रक्तपीतारुणास्तत्र पादपाग्रगताः खगाः । परस्परमवेक्षन्ते प्रहृष्टा जीवजीवकाः ॥६

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

…स्यां सभायां दैत्येन्द्रो हिरण्यकशिपुस्तदा। स्त्रीसहस्त्रैः परिवृतो विचित्राभरणाम्बरः
…र्घ्यमणिवज्रार्चिशिखाज्वलितकुण्डलः। आसीनश्चासने चित्रे दश नल्वप्रमाणतः॥
…स्करनिभे दिव्ये दिव्यास्तरणसंस्तृते। दिव्यगन्धवहस्तत्रमारुतःसुसुखोववौ ॥७०

हिरण्यकशिपुर्दैत्य आस्ते ज्वलितकुण्डलः।
उपचेरुर्महादैत्यं हिरण्यकशिपुं तदा ॥७१॥

…व्यतानेन गीतानि जगुर्गन्धर्वसत्तमाः। विश्वाची सहजन्याच प्रम्लोचेत्यभिविश्रुता
…था सौरभेयीच समीची पुञ्जिकस्थली। मिश्रकेशीचरम्भाचचित्रलेखाशुचिस्मिता
…केशी घृताची च मेनका चोर्वशीतथा। एताः सहस्त्रशश्चान्या नृत्यगीतविशारदाः
…तिष्ठन्त राजानं हिरण्यकशिपुं प्रभुम्। तत्रासीनं महाबाहुं हिरण्यकशिपुं प्रभुम्॥
…सन्त दितेः पुत्राः सर्वे लब्धवरास्तथा। तमप्रतिमकर्माणं शतशोऽथ सहस्त्रशः॥७६
…र्विरोचनस्तत्र नरकः पृथिवीसुतः। प्रह्लादो विप्रचित्तिश्च गविष्ठश्च महासुरः ॥७७॥
…हन्ता दुःखहन्ता सुनामा सुमतिर्वरः। घटोदरो महापार्श्वः क्रथनः कठिनस्तथा॥
…रूपः सुरूपश्च स्वबलश्च महाबलः। दशग्रीवश्च वालीच मेघवासा महासुरः ॥७९॥
…रो कम्पनश्चैव प्रजनश्चेन्द्रतापनः। दैत्यदानवसंघास्ते सर्वे ज्वलितकुण्डलाः॥

स्त्रग्विणो वाग्मिनः सर्वे सदैव चरितव्रताः।
सर्वे लब्धवराः शूराः सर्वे विगतमृत्यवः॥ ८१॥
एते चान्ये च बहवो हिरण्यकशिपुं प्रभुम्।
उपासन्ति महात्मानं सर्वे दिव्यपरिच्छदाः॥ ८२॥

…नैर्विविधाकारैर्भ्राजमानैरिवाग्निभिः। महेन्द्रवपुषः सर्वे विचित्राङ्गदबाहवः ॥८३
…नाङ्गा दितेःपुत्रास्तमुपासन्त सर्वशः। तस्यां सभायान्दिव्यायामसुराःपर्वतोपमाः॥
…वपुषः सर्वे दिवाकरसमप्रभाः। न श्रुतन्नैव दृष्टं हि हिरण्यकशिपोर्यथा ॥८५॥

ऐश्वर्यं दैत्यसिंहस्य यथा तस्य महात्मनः।
कनकरजतचित्रवेदिकायां परिहृतरत्नविचित्रवीथिकायाम्।
स ददर्श मृगाधिपः सभायां सुरचितरत्नगवाक्षशोभितायाम्॥ ८७॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कनकविमलहारविभूषिताङ्गं दितितनयं स मृगाधिपो ददर्श।
दिवसकरमहाप्रभालसं तन्दितिजसहस्रशतै निषेव्यमाणम् ॥ ८८॥

इति श्री मत्स्यपुराणे हिरण्यकशिपुवैभववर्णनंनाम षष्ट्यधिकशततमोऽध्यायः।

---

# एकषष्ट्यधिकशततमोऽध्यायः

## नरसिंहमाहात्म्यवर्णनम् ।

सूत उवाच ।

ततो दृष्ट्वा महात्मानं कालचक्रमिवागतम् । नरसिंहवपुश्छन्नं भस्मच्छन्नमिवानलम्
हिरण्यकशिपोः पुत्रः प्रह्लादोनाम वीर्यवान् । दिव्येन चक्षुषा सिंहमपश्यद्देवमागतम्
तं दृष्ट्वा रुक्मशैलाभमपूर्वान्तनुमाश्रितम् । विस्मिता दानवाः सर्वे हिरण्यकशिपुश्च

प्रह्लाद उवाच ।

महाबाहो ! महाराज ! दैत्यानामादिसम्भव । न श्रुतं न च नोदृष्टं नारसिंहमिदं वपुः
अव्यक्तप्रभवन्दिव्यं किमिदं रूपमागतम् । दैत्यान्तकरणं घोरं संशतीव मनो मम
अस्य देवाः शरीरस्थाः सागराः सरितश्चयाः । हिमवान्पारियात्रश्चयेचान्येकुलपर्वताः
चन्द्रमाश्च सनक्षत्रैरादित्यैर्वसुभिः सह । धनदो वरुणश्चैव यमः शक्रः शचीपतिः

मरुतो देवगन्धर्वा ऋषयश्च तपोधनाः ।
नागा यक्षाः पिशाचाश्च राक्षसा भीमविक्रमाः ॥८॥

ब्रह्मा देवः पशुपतिर्ललाटस्था भ्रमन्ति वै । स्थावराणि च सर्वाणि जङ्गमानि तथैव
भवांश्च सहितोऽस्माभिः सर्वैर्देवगणैर्वृतः । विमानशतसङ्कीर्णा तथैव भवतः सभा

सर्वं त्रिभुवनं राजन् ! लोकधर्माश्च शाश्वताः ।
दृश्यन्ते नारसिंहेऽस्मिंस्तथेदमखिलं जगत् ॥११॥
प्रजापतिश्चात्र मनुर्महात्मा ग्रहाश्च योगश्च महीरुहाश्च ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उत्पातकालश्च धृतिर्मतिश्च रतिश्च सत्यश्च तपो दमश्च ॥१२॥
सनत्कुमारश्च महानुभावो विश्वे च देवा ऋषयश्च सर्वे ।
क्रोधश्च कामश्च तथैव हर्षो धर्म्मश्च मोहः पितरश्च सर्वे ॥१३॥
प्रह्लादस्य वचः श्रुत्वा हिरण्यकशिपुः प्रभुः ।
उवाच दानवान् सर्वान् गणांश्च स गणाधिपः ॥१४॥
…न्द्रो गृह्यतामेष अपूर्वं सत्वमास्थितः । यदि वा संशयः कश्चिद्वध्यतां वनगोचरः
…दानवगणाः सर्वे मृगेन्द्रं भीमविक्रमम् । परिक्षिपन्तो मुदितास्त्रासयामासुरोजसा ॥
…हनादं विमुच्याथ नरसिंहो महाबलः । बभञ्ज तां सभां सर्वां व्यादितास्यइवान्तकः
…मायांभज्यमानायांहिरण्यकशिपुःस्वयम् । चिक्षेपास्त्राणिसिंहस्यरोषाद्व्याकुललोचनः
सर्वास्त्राणामथ ज्येष्ठं दण्डमस्त्रं सुदारुणम् ।
कालचक्रं तथा घोरं विष्णुचक्रं तथा परम् ॥१६॥
…महं तथात्युग्रं त्रैलोक्यदहनं महत् । विचित्रामशनीञ्चैव शुष्कार्द्रं चाशनिद्वयम् ॥
…ं तथोग्रं शूलञ्च कङ्कालं मुसलं तथा । मोहनं शोषणं चैव सन्तापनविलापनम् ॥
…व्यं मथनं चैव कापालमथ कैङ्करम् । तथाप्रतिहतां शक्तिं क्रौञ्चमस्त्रं तथैव च ॥
…त्रं ब्रह्मशिरश्चैव सोमास्त्रं शिशिरं तथा । कम्पनं शतनञ्चैव त्वाष्ट्रञ्चैव सुभैरवम् ॥
…सुद्गरमक्षोभ्यं तपनञ्च महाबलम् । संवर्तनं मादनञ्च तथा मायाधरं परम् ॥२४॥
…र्वमस्त्रं दयितमसिरत्नं च नन्दकम् । प्रस्वापनं प्रमथनं वारुणं चास्त्रमुत्तमम् ।
अस्त्रं पाशुपतञ्चैव यस्याप्रतिहता गतिः ॥२५॥
…वं हयशिरश्चैव ब्राह्ममस्त्रं तथैव च । नारायणास्त्रमैन्द्रञ्च सार्पमस्त्रं तथाद्भुतम् ॥
…मस्त्रमजितं शोषदं शामनं तथा । महाबलं भावनं च प्रस्थापनविकम्पने ॥२७॥
एतान्यस्त्राणि दिव्याणि हिरण्यकशिपुस्तदा ।
असृजन्नरसिंहस्य दीप्तस्याग्नेरिवाहुतिम् ॥२८॥
…भिः प्रज्वलितैः सिंहमावृणोदसुरोत्तमाः । विवस्वान् धर्म्मसमयेहिमवन्तमिवांशुभिः
…मर्षानिलोद्धूतो दैत्यानां सैन्यसागरः । क्षणेन प्लावयामास मैनाकमिव सागरः ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रासैः पाशैश्च खड्गैश्च गदाभिर्मुसलैस्तथा । वज्रैरशनिभिश्चैव साग्निभिश्च महाद्रुमैः ।
मुद्गरैर्भिन्दिपालैश्च शिलोलूखलपर्वतैः । शतघ्नीभिश्च दीप्ताभिर्दण्डैरपि सुदारुणैः ।
ते दानवाः पाशगृहीतहस्ता महेन्द्रतुल्याशनिवज्रवेगाः ।
समन्ततोऽभ्युद्यतबाहुकायाः स्थितास्त्रिशीर्षा इव नागपाशाः ॥ ३३ ॥
सुवर्णमालाकुलभूषिताङ्गाः पीतांशुकाभोगविभाविताङ्गाः ।
मुक्तावलीदामसनाथकक्षा हंसा इवा भान्ति विशालपक्षाः ॥ ३४ ॥
तेषां तु वायुप्रतिमौजसां वै केयूरमौलीवलयोत्कटानाम् ।
तान्युत्तमाङ्गान्यभितो विभान्ति प्रभातसूर्यांशुसमप्रभाणि ॥ ३५ ॥
क्षिपद्भिरुग्रैर्ज्वलितैर्महाबलैर्महास्त्रपूगैः सुसमावृतो बभौ ।
गिरिर्यथा सन्ततवर्षिभिर्घनैः कृतान्धकारान्तरकन्दरोद्रुमैः ॥ ३६ ॥
तैर्हन्यमानोऽपि महास्त्रजालैर्महाबलैर्दैत्यगणैः समेतैः ।
नाकम्पताजौ भगवान् प्रतापस्थितप्रकृत्या हिमवानिवाचलः ॥३७॥
सन्त्रासितास्तेन नृसिंहरूपिणा दितेः सुताः पावकतुल्यतेजसा ।
भयाद्विचेलुः पवनोद्धुताङ्गा यथोर्मयः सागरवारिसम्भवाः ॥३८॥

इति श्रीमत्स्यपुराणे हिरण्यकशिपुनरसिंह युद्धवर्णनं नामैकषष्ट्यधिकशततमोऽध्यायः ।

———

## द्विषष्ट्यधिकशततमोऽध्यायः

### अन्यदानवैः सह नरसिंहयुद्धम् ।

सूत उवाच ।

खराः खरमुखाश्चैव मकराशीविषाननाः । ईहामृगमुखाश्चान्ये वराहमुखसंस्थिताः ।
बालसूर्यमुखाश्चान्ये धूमकेतुमुखास्तथा । अर्द्धचन्द्रार्धवक्त्राश्च अग्निदीप्तमुखास्तथा ।
हंसकुक्कुटवक्त्राश्च व्यादितास्या भयावहाः । सिंहास्यालेलिहानाश्च काकगृध्रमुखास्तथा ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[ग्र]जिह्वकावक्त्रशीर्षास्तथोल्का मुखसंस्थिताः । महाग्राहमुखाश्चान्ये दानवाबलदर्पिताः
[ते]संवर्षमाणस्तस्य शरीरे शरवृष्टिभिः । अवध्यस्य मृगेन्द्रस्य न व्यथाश्चक्रुराहवे ॥५॥

एवं भूयोऽपरान् घोरानसृजन् दानवेश्वराः ।
मृगेन्द्रस्योपरि क्रुद्धा निश्वसन्त इवोरगाः ॥ ६ ॥

[ते] दानवशरा घोरा दानवेन्द्रसमीरिताः । विलयं जग्मुराकाशे खद्योता इव पर्वते ॥७॥
[त]श्चक्राणि दिव्यानि दैत्याःक्रोधसमन्विताः । मृगेन्द्रायासृजन्नाशु ज्वलितानिसमन्ततः
[त]त्रासीद्गगनं चक्रैः सम्पतद्भिरितस्ततः । युगान्ते सम्प्रकाशद्भिश्चन्द्रादित्यग्रहैरिव ॥९॥
[ता]नि सर्वाणिचक्राणिमृगेन्द्रेणाशमात्मना । ग्रस्तान्युदीर्णानि तदापावकार्चिःसमानिवै
[ता]नि चक्राणि वदनं विशमानानि भान्ति वै । मेघोदरदरीष्वेव चन्द्रसूर्यग्रहा इव ॥११

हिरण्यकशिपुर्दैत्यो भूयः प्रासृजदूर्जिताम् ।
शक्तिं प्रज्वलितां घोरां धौतशस्त्रतड़ित्प्रभाम् ॥ १२ ॥

[त]मापतन्तीं संप्रेक्ष्य मृगेन्द्रः शक्तिमुज्वलाम् । हुङ्कारेणैव रौद्रेण बभञ्ज भगवांस्तदा
[र]राज भग्नासाशक्तिर्मृगेन्द्रेणमहीतले । स विस्फुलिङ्गा ज्वलिता महोल्केवदिवश्च्युता
[ना]राचपङ्क्तिः सिंहस्य प्राप्ता रेजे विदूरतः । नीलोत्पलपलाशानां मालेवोज्ज्वलदर्शना

स गर्जित्वा यथान्यायं विक्रम्य च यथासुखम् ।
तत्सैन्यमप्सारितवान् तृणाग्राणीव मारुतः ॥ १६ ॥

[त]तोऽश्मवर्षं दैत्येन्द्रा व्यसृजन्त नभोगताः । नगमात्रैः शिलाखण्डैर्गिरिश्रृङ्गैर्महाप्रभैः ।
[त]दश्मवर्षं सिंहस्य महन्मूर्द्धनिपातितम् । दिशोदश विकीर्णा वै खद्योतप्रकरा इव ॥
[त]दश्मौघैर्दैत्यगणाः पुनः सिंहमरिन्दमम् । छायायां चक्रिरे मेघा धाराभिरिव पर्वतम्
[न] चतं चालयामासुर्दैत्यौघादेवसत्तमम् । भीमवेगोऽचलश्रेष्ठं समुद्र इव मन्दरम् ॥२०॥
[त]तोऽश्मवर्षेविहिते जलवर्षमनन्तरम् । धाराभिरक्षमात्राभिः प्रादुरासीत् समन्ततः ॥
[न]भसः प्रच्युताधारास्तिग्मवेगाः समन्ततः । आवृत्यसर्वतो व्योमदिशश्चोपदिशस्तथा

धारा दिवि च सर्वत्र वसुधायाश्च सर्वशः ।
न स्पृशन्ति च ता देवं निपतन्त्योऽनिशं भुवि ॥ २३ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चाह्यतो ववृषुर्वर्षं नोपरिष्टाच्च ववृषुः। मृगेन्द्रप्रतिरूपस्य स्थितस्य युधि मायया
हतेऽश्मवर्षे तुमुले जलवर्षे च शोषिते। सोऽसृजद्दानवो मायामग्निवायुसमीरिताम्
महेन्द्रस्तोयदैः सार्द्धं सहस्राक्षो महाद्युतिः। महता तोयवर्षेण शमयामास पावकम्
तस्यां प्रतिहतायां तु मायायां युधि दानवः। असृजत् घोरसंकाशं तमस्तीव्रं समन्त
तमसा संवृते लोके दैत्येष्वात्तायुधेषु च। स्वतेजसा परिवृतो दिवाकर इवाबभौ
त्रिशाखां भ्रुकुटीश्चास्य ददृशुर्दानवा रणे। ललाटस्थां त्रिशूलाङ्कां गङ्गां त्रिपथगा
ततः सर्वासु मायासु हतासु दितिनन्दनाः। हिरण्यकशिपुं दैत्यं विवर्णाः शरणं ययुः

ततः प्रज्वलितः क्रोधात् प्रदहन्निव तेजसा।
तस्मिन् क्रुद्धे तु दैत्येन्द्रे तमोभूतमभूज्जगत् ॥ ३१ ॥

आवहः प्रवहश्चैव विवहोऽथ ह्युदावहः। परावहः संवहश्च महाबलपराक्रमाः ॥ ३
तथा परिवहः श्रीमानुत्पातभयशंसनाः। इत्येवं क्षुभिताः सप्त मरुतो गगनेचराः ॥ ३
ये ग्रहाः सर्वलोकस्य क्षये प्रादुर्भवन्ति वै। ते सर्वे गगने दृष्टा व्यचरन्त यथासुखम्
अन्यङ्गते चाप्यचरन्मार्गं निशि निशाचरः। संग्रहः सहनक्षत्रै राकापतिररिन्दमः ॥ ३
विवर्णताश्च भगवान् गतो दिवि दिवाकरः। कृष्णं कवन्धं च तथा लक्ष्यते सुमहद्दिवि
अमुश्चच्चार्चिषां वृन्दं भूमिवृत्तिर्विभावसुः। गगनस्थश्च भगवानभीक्ष्णं परिदृश्यते ॥

सप्त धूम्रनिभा घोराः सूर्य्या दिवि समुत्थिताः।
सोमस्य गगनस्थस्य ग्रहास्तिष्ठन्ति शृङ्गगाः ॥ ३८ ॥

वामेन दक्षिणे चैव स्थितौ शुक्रबृहस्पती। शनैश्चरो लोहिताङ्गो ज्वलनाङ्गसमुद्युती
समं समधिरोहन्तः सर्वे ते गगनेचराः। शृङ्गाणि शनकैर्घोरा युगान्तावर्तिनो ग्रहाः
चन्द्रमाश्च सनक्षत्रैर्ग्रहैः सह तमोनुदः। चराचरविनाशाय रोहिणीं नाभ्यनन्दत ॥
गृह्यते राहुणाचन्द्र उल्काभिरभिहन्यते। उल्काः प्रज्वलिताश्चन्द्रे विचरन्ति यथासुखम्
देवानामपि यो देवः सोऽप्यवर्षतशोणितम्। अपतन् गगनादुल्का विद्युद्रूपामहास्वनाः
अकाले च द्रुमाःसर्वे पुष्पन्ति च फलन्ति च। लताश्च सफलाःसर्वा येचाहुर्दैत्यनाशनम्
फलैःफलान्यजायन्त पुष्पैःपुष्पं तथैव च। उन्मीलन्ति निमीलन्ति हसन्तिव रुदन्ति

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[...]क्रोशन्ति च गम्भीरा धूमयन्ति ज्वलन्ति च । प्रतिमाः सर्वदेवानां वेदयन्ति महद्भयम्
[...]रण्यैः सह संसृष्टा ग्राम्याश्च मृगपक्षिणः । चक्रुः सुभैरवं तत्र महायुद्धमुपस्थितम् ।
नद्यश्च प्रतिकूलानि वहन्ति कलुषोदकाः ।
न प्रकाशन्ति च दिशो रक्तरेणुसमाकुलाः ॥ ४८ ॥
[...]नस्पतयो न पूज्यन्ते पूजनार्हाः कथञ्चन । वायुवेगेन हन्यन्ते भज्यन्ते प्रणमन्ति च ॥
[...]च सर्वभूतानां छाया न परिवर्तते । अपराह्णगते सूर्ये लोकानां युगसंक्षये ॥ ५० ॥
[...]हिरण्यकशिपोर्दैत्यस्योपरि वेश्मनः । भाण्डागारे युधागारे निविष्टमभवन्मधु ॥
[...]सुराणां विनाशायसुराणांविजयाय च । दृश्यन्ते विविधोत्पाता घोराघोरनिदर्शनाः
एते चान्ये च बहवो घोरोत्पाताः समुत्थिताः ।
दैत्येन्द्रस्य विनाशाय दृश्यन्ते कालनिर्मिताः ॥ ५३ ॥
[...]दिन्यां कम्पमानायां दैत्येन्द्रेण महात्मना । महीधरा नागगणा निपेतुरमितौजसः ॥
[...]ज्वालाकुलैर्वक्त्रैर्विमुञ्चन्तो हुताशनम् । चतुःशीर्षाः पञ्चशीर्षाः सप्तशीर्षाश्चपन्नगाः
[...]सुकिस्तक्षकश्चैव कर्कोटकधनञ्जयौ । एलामुखः कालिकश्च महापद्मश्च वीर्यवान् ॥
[...]स्रशीर्षा नागोवै हेमतालध्वजः प्रभुः । शेषोऽनन्तोमहाभागो दुष्प्रकम्प्यःप्रकम्पितः
दीप्तान्यन्तर्जलस्थानि पृथिवीधरणानि च ।
तदा क्रुद्धेन महता कम्पितानि समन्ततः ॥ ५८ ॥
[...]नास्तेजोधराश्चापि पातालतलचारिणः । हिरण्यकशिपुर्दैत्यस्तदा संस्पृष्टवान्महीम्
[...]दैत्यपुरः क्रोधाद्वाराह इव पूर्वजः । नदी भागीरथी चैव सरयूः कौशिकी तथा ॥
[...]मुना त्वथ कावेरी कृष्णवेणी च निम्नगा । सुवेणा च महाभागा नदी गोदावरीतथा
[...]र्मण्वती च सिन्धुश्च तथा नदनदीपतिः । कमलप्रभवश्चैव शोणोमणिनिभोदकः ॥
नर्मदा शुभतोया च तथा वेत्रवती नदी ।
गोमती गोकुलाकीर्णा तथा पूर्वसरस्वती ॥ ६३ ॥
[...]मही कालमही चैव तमसा पुष्पवाहिनी । जम्बूद्वीपं रत्नवटं सर्वरत्नोपशोभितम् ॥६४॥
[...]र्णकरञ्चैव सुवर्णाकरमण्डितम् । महानदश्च लौहित्यं शैलकाननशोभितम् ॥६५॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पत्तनं कोशकरणं ऋषिवीरजनाकरम् । मागधाश्च महाग्रामा मुण्डाः शुङ्गास्तथैव च

सुह्मा मल्ला विदेहाश्च मालवाः काशिकोसलाः ।
भवनं वैनतेयस्य दैत्येन्द्रेणाभिकम्पितम् ॥ ६७ ॥
कैलासशिखराकारं यत् कृतं विश्वकर्मणा ।
रक्ततोयो महाभोमो लौहित्यो नाम सागरः ॥ ६८ ॥

उदयश्च महाशैल उच्छ्रितः शतयोजनम् । सुवर्णवेदिकः श्रीमान् मेघपङ्क्तिनिषेवि
भ्राजमानोऽर्कसदृशैर्जातरूपमयैर्द्रुमैः । शालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः
अयोमुखश्च विख्यातः सर्वतो धातुमण्डितः । तमालवनगन्धश्च पर्वतो मलयः शु

सुराष्ट्राश्च सवाल्हीकाः शूराभीरास्तथैवच ।
भोजाः पाण्ड्याश्च वङ्गाश्च कलिङ्गास्ताम्रलिप्तकाः ॥ ७२ ॥

तथैवोड्राश्च पौण्ड्राश्च वामचूडाःसकेरलाः। क्षोभितास्तेन दैत्येन सदेवाश्चाप्सरोग
अगस्त्यभवनञ्चैव यदगम्यङ्कृतं पुरा । सिद्धचारणसङ्घैश्च विप्रकीर्णं मनोहरम् ॥
विचित्रनानाविहगं सुपुष्पितमहाद्रुमम् । जातरूपमयैः शृङ्गैर्गगनं विलिखन्निव ॥
चन्द्रसूर्यांशुसङ्काशैः सागराम्बुसमावृतैः । विद्युत्त्वान् सर्वतः श्रीमानायतः शतयोजन
विद्युतां यत्र सङ्घाता निपात्यन्ते नगोत्तमे । ऋषभः पर्वतश्चैव श्रीमान् वृषभसंज्ञि
कुञ्जरः पर्वतः श्रीमानगस्त्यस्य गृहं शुभम् । विशालाक्षश्च दुर्धर्षः सर्पाणामालयः शु
तथा भोगवतीचापि दैत्येन्द्रेणाभिकम्पिताः । महासेनो गिरिश्चैव पारियात्रश्च पर्व
चक्रवांश्च गिरिश्रेष्ठो वाराहश्चैव पर्वतः । प्राग्ज्योतिषपुरञ्चापि जातरूपमयं शुभ
यस्मिन्वसति दुष्टात्मा नरको नाम दानवः । विशालाक्षश्च दुर्द्धर्षो मेघगम्भीरनिस्व
षष्टिस्तत्र सहस्राणि पर्वतानां द्विजोत्तमाः । तरुणादित्यसङ्काशो मेरुस्तत्र महागिरि
यक्षराक्षसगन्धर्वैर्नित्यं सेवितकन्दरः । हेमगर्भो महाशैलस्तथा हेमसखो गिरिः ।
कैलासश्चैव शैलेन्द्रो दानवेन्द्रेण कम्पिताः । हेमपुष्परसक्षेत्रं तेन वैखानसं सरः ।
कम्पितं मानसञ्चैव हंसकारण्डवाकुलम् । त्रिशृङ्गपर्वतश्चैव कुमारी च सरिद्वरा ।
तुषारचयसञ्छन्ना मन्दरश्चापि पर्वतः । उशीरबिन्दुश्च गिरिश्चन्द्रप्रस्थस्तथाद्रिराट्

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

...पतिगिरिश्चैव तथा पुष्करपर्वतः। देवाभ्रपर्वतश्चैव यथावै रेणुकोगिरिः ॥ ८७ ॥
...: सप्तर्षिशैलश्च धूम्रवर्णश्च पर्वतः। एते चान्ये च गिरयो देशा जनपदास्तथा ॥

नद्यः ससागराः सर्वाः सोऽकम्पयत दानवः।
कपिलश्च महीपुत्रो व्याघ्रवांश्चैव कम्पितः ॥ ८६ ॥

...राश्च सतीपुत्राः पातालतलवासिनः। गणस्तथा परोरौद्रो मेघनामाङ्कुशायुधः ॥
...र्गो भीमवेगश्च सर्व एवाभिकम्पिताः। गदी शूली करालश्च हिरण्यकशिपुस्तदा॥
...तघनसङ्काशो जीमूतघननिस्वनः। जीमूतघननिर्घोषो जीमूत इव वेगवान् ॥ ६२ ॥
...र्दितिजो वीरो नृसिंहं समुपाद्रवत्। समुत्पत्य ततस्तीक्ष्णैर्मृगेन्द्रेण महानखैः ॥

तदोङ्कारसहायेन विदार्य निहतोयुधि।
मही च कालश्च वशी नभश्च ग्रहाश्च सूर्यश्च दिशश्च सर्वाः।
नद्यश्च शैलाश्च महार्णवाश्च गताः प्रसादन्दितिपुत्रनाशात् ॥ ६४ ॥

...ः प्रमुदिता देवा ऋषयश्च तपोधनाः। तुष्टुवुर्नामभिर्दिव्यैरादिदेवं सनातनम् ॥६५॥
...या विहितं देव! नारसिंहमिदं वपुः। एतद्देवार्चयिष्यन्ति परावरविदोजनाः ॥

ब्रह्मोवाच।

भवान् ब्रह्मा च रुद्रश्च महेन्द्रो देवसत्तमाः!।
भवान् कर्ता विकर्ता च लोकानां प्रभवाप्ययः ॥ ६७ ॥
पराञ्च सिद्धाञ्च परञ्च देवं परञ्च मन्त्रं परमं हविश्च।
परञ्च धर्मं परमञ्च विश्वं त्वामाहुरग्र्यं पुरुषं पुराणम् ॥ ६८ ॥
परं शरीरं परमञ्च ब्रह्म परञ्च योगं परमाञ्च वाणीम्।
परं रहस्यं परमाङ्गतिञ्च त्वामाहुरग्र्यं पुरुषं पुराणम् ॥ ६६ ॥
एवं परस्यापि परं पदं यत् परं परस्यापि परञ्च देवम्।
परं परस्यापि परञ्च भूतन्त्वामाहुरग्र्यं पुरुषं पुराणम् ॥ १०० ॥
परं परस्यापि परं निधानं परं परस्यापि परं पवित्रम्।
परं परस्यापि परं च दान्तन्त्वामाहुरग्र्यं पुरुषं पुराणम् ॥ १०१ ॥


CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एवमुक्त्वा तु भगवान् सर्वलोकपितामहः। स्तुत्वा नारायणं देवं ब्रह्मलोकं गतः प्रभुः
ततो नदत्सु तूर्येषु नृत्यन्तीष्वप्सरःसु च। क्षीरोदस्योत्तरं कूलं जगाम हरिरीश्वरः
नारसिंहं वपुर्देवः स्थापयित्वा सुदीप्तिमत्। पौराणं रूपमास्थाय प्रययौ गरुडध्वजः
अष्टचक्रेण यानेन भूतयुक्तेन भास्वता। अव्यक्तप्रकृतिर्देवः स्वस्थानं गतवान् प्रभुः

इति श्रीमत्स्यपुराणे नरसिंहमाहात्म्यवर्णनं नाम द्विषष्ट्यधिकशततमोऽध्यायः

---

# त्रिषष्ट्यधिकशततमोऽध्यायः

## मनुमत्स्यसंवादवर्णनम्।

ऋषय ऊचुः।

कथितं नरसिंहस्य माहात्म्यं विस्तरेण च। पुनस्तस्यैव माहात्म्यमन्यद्विस्तरतो वद
पद्मरूपमभूदेतत् कथं हेममयं जगत्। कथञ्च वैष्णवी सृष्टिः पद्ममध्येऽभवत्पुरा

सूत उवाच।

श्रुत्वा च नरसिंहस्य माहात्म्यं रविनन्दनः। विस्मयोत्फुल्लनयनः पुनः प्रपच्छ केशवम्

मनुरुवाच।

कथं पाद्मे महाकल्पे तव पद्ममयं जगत्। जलार्णवगतस्येह नाभौ जातं जनार्दन!
प्रभावात् पद्मनाभस्य स्वपतः सागराम्भसि। पुष्करे च कथं भूता देवाः सर्षिगणाः
एनमाख्याहि निखिलं योगं योगविदाम्पते!। शृण्वतस्तस्य मे कीर्ति नतृप्तिरुपजायते

कियता चैव कालेन शेते वै पुरुषोत्तमः।
कियन्तं वा स्वपिति च कोऽस्य कालस्य सम्भवः॥ ७॥

कियतावाथ कालेन ह्युत्तिष्ठति महायशाः। कथञ्चोत्थाय भगवान् सृजते निखिलं
के प्रजापतयस्तावदासन् पूर्वं महामुने!। कथं निर्मितवांश्चैव चित्रं लोकं सनातनम्
प्रथमेकार्णवे शून्ये नष्टस्थावरजङ्गमे। दग्धदेवासुरनरे प्रनष्टोरगराक्षसे॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

...निलानले लोके नष्टाकाशमहीतले । केवलं गह्वरीभूते महाभूतविपर्यये ॥ ११ ॥
...महाभूतपतिर्महातेजा महाकृतिः । आस्ते सुरवरश्रेष्ठो विधिमास्थाय योगवित् ॥१२
...णां परया भक्त्या ब्रह्मन्नेतदशेषतः । वक्तुमर्हसि धर्मिष्ठ ! यशो नारायणात्मकम् ॥
श्रद्धया चोपविष्टानां भगवान् ! वक्तुमर्हसि ।

मत्स्य उवाच ।

नारायणस्य यशसः श्रवणे या तव स्पृहा ॥ १४ ॥
...वंशान्वयभूतस्य न्याय्यं रविकुलर्षभ !। शृणुष्वादिपुराणेषु वेदेभ्यश्च यथाश्रुतम् ॥
...णानाञ्च वदतां श्रुत्वा वै सुमहात्मनाम् । यथा च तपसा दृष्ट्वा बृहस्पतिसमद्युतिः ॥
...शरसुतः श्रीमान् गुरुर्द्वैपायनोऽब्रवीत् । तत्तेऽहं कथयिष्यामि यथाशक्ति यथाश्रुति
...ज्ञातुं मया शक्यमृषिमात्रेण सत्तमाः ! । कः समुत्सहते ज्ञातुं परं नारायणात्मकम्
...यणश्च यद्ब्रह्मा न वेदयति तत्त्वतः । तत्कर्म्म विश्ववेदानां तद्रहस्यं महर्षिणाम्
...ज्यं सर्वयज्ञानां तत्तत्त्वं सर्वदर्शिनाम् । तदध्यात्मविदां चिन्त्यंनरकं न विकर्मिणाम्
...दैवश्च यद्दैवमधियज्ञं सुसंज्ञितम् । तद्भूतमधिभूतञ्च तत्परं परमर्षिणाम् ॥ २१ ॥
...यज्ञो वेदनिर्दिष्टस्तत्तपः कवयो विदुः । यः कर्ता कारको बुद्धिर्मनः क्षेत्रज्ञ एव च
...नः पुरुषः शास्ता एकश्चेति विभाव्यते । प्राणः पञ्चविधश्चैव ध्रुव अक्षर एव च
...नः शाकश्च यन्ता चद्रष्टास्वाध्याय एव च । उच्यते विविधैर्देवः स एवायं न तत्परम्
स एव भगवान् सर्वं करोति विकरोति च ।
सोऽस्मान् कारयते सर्वान् सोऽत्येति व्याकुलीकृतान् ॥ २५ ॥
...महे तमेवाद्यन्तमेवेच्छाम निर्वृताः । यो वक्ता यच्च वक्तव्यं यच्चाहन्तद्ब्रवीमि वः
...ते यच्च वै श्राव्यं यच्चान्यत् परिजल्प्यते । याःकथाश्चैव वर्तन्ते श्रुतयो वाथ तत्पराः
विश्वं विश्वपतिर्यश्च स तु नारायणःस्मृतः ।
यत् सत्यं यदमृतमक्षरं परं यत् यद्भूतं परममिदं च यद्भविष्यत् ।
यत् किञ्चिचरमचरं यदस्ति चान्यत् तत् सर्वं पुरुषवरः प्रभुः पुराणः॥२८॥
इति श्रीमत्स्यपुराणे मनुमत्स्यसंवादवर्णनं नाम त्रिषष्ट्यधिकशततमोऽध्यायः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# चतुःषष्ट्यधिकशततमोऽध्यायः

## चातुर्युगगतिवर्णनम् ।

मत्स्य उवाच ।

चत्वार्याहुः सहस्राणि वर्षाणान्तु कृतं युगम् ।
तस्य तावच्छती सन्ध्या द्विगुणा रविनन्दन ! ॥ १ ॥

यत्र धर्मश्चतुष्पादस्त्वधर्मः पादविग्रहः । स्वधर्मनिरताः सन्तो जायन्ते यत्र मान

विप्राः स्थिता धर्मपरा राजवृत्तौ स्थिता नृपाः ।
कृष्यामभिरता वैश्याः शूद्राः शुश्रूषवः स्थिताः ॥ ३ ॥

तदा सत्यञ्च शौचञ्च धर्मश्चैव विवर्धते । सद्भिराचरितं कर्म क्रियते ख्यायते च

एतत् कार्त्तयुगं वृत्तं सर्वेषामपि पार्थिव ! । प्राणिनांधर्मसङ्गानामपि वै नीचजन्म

त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते । तस्यतावच्छतीसन्ध्याद्विगुणा परिकी

द्वाभ्यामधर्मः पादाभ्यांत्रिभिर्धर्मोव्यवस्थितः । यत्र सत्यञ्च सत्वञ्चत्रेताधर्मो विध

त्रेतायां विकृतिं यान्ति वर्णास्त्वेतेन संशयः ।
चतुर्वर्णस्य वैकृत्याद्यान्ति दौर्बल्यमाश्रमाः ॥ ८ ॥

एषा त्रेतायुगगति र्विचित्रा देवनिर्मिता । द्वापरस्य तु या चेष्टा तामपि श्रोतुमर्ह

द्वापरन्द्वे सहस्रे तु वर्षाणां रविनन्दन ! । तस्य तावच्छती सन्ध्या द्विगुणा युगमु

तत्र चार्थपराः सर्वे प्राणिनो रजसा हताः । सर्वे नैष्कृतिकाःक्षुद्रा जायन्ते रविनन्द

द्वाभ्यां धर्मः स्थितः पद्भ्यामधर्मस्त्रिभिरुत्थितः ।
विपर्ययाच्छनैर्धर्मः क्षयमेति कलौ युगे ॥ १२ ॥

ब्राह्मण्यभावस्य ततो तथौत्सुक्यं व्यशीर्यते । व्रतोपवासास्त्यज्यन्ते द्वापरे युग

तथा वर्षसहस्रन्तु वर्षाणां द्वेशते अपि । सन्ध्ययासह संख्यातं क्रूरङ्कलियुगं स्मृत

यत्राधर्मश्चतुष्पादः स्याद्ध धर्मःपादविग्रहः । कामिनस्तपसाच्छन्नाजायन्ते तत्र मा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नैवातिसात्त्विकः कश्चिन्न साधुर्न च सत्यवाक् ।
नास्तिका ब्रह्मभक्ता वा जायन्ते तत्र मानवाः ॥ १६ ॥
ह्मागृहीताश्च प्रक्षीणस्नेहबन्धनाः । विप्राः शूद्रसमाचाराः सन्ति सर्वे कलौ युगे ॥
माणां विपर्यासः कलौ संपरिवर्तते । वर्णानाञ्चैव सन्देहो युगान्ते रविनन्दन ! ॥
विद्याद् द्वादशसाहस्रीं युगाख्यां पूर्वनिर्मिताम् ।
एवं सहस्रपर्यन्तं तदहो ब्राह्ममुच्यते ॥ १९ ॥
ऽहनि गते तस्मिन् सर्वेषामेव जीविनाम् । शरीरनिर्वृतिं दृष्ट्वा लोकसंहारबुद्धितः ॥
नाञ्च सर्वासां ब्रह्मादीनांमहीपते ! । दैत्यानां दानवानाञ्च यक्षराक्षसपक्षिणाम् ॥
र्वाणामप्सरसां भुजङ्गानाञ्च पार्थिव ! । पर्वतानां नदीनाञ्च पशूनाञ्चैव सत्तम ! ॥
तिर्यग्योनिगतानाञ्च सत्वानां कृमिणान्तथा ।
महाभूतपतिः पञ्च हृत्वा भूतानि भूतकृत् ॥ २३ ॥
जगत्संहरणार्थाय कुरुते वैशसं महत् ।
भूत्वा सूर्यश्चक्षुषी चाददानो भूत्वा वायुः प्राणिनां प्राणजालम् ।
भूत्वा वह्निर्निर्दहन् सर्व लोकान् भूत्वा मेघो भूय उग्रोऽप्यवर्षत् ॥ २४ ॥
इति श्रीमत्स्यपुराणे चातुर्युगगतिवर्णनं नाम चतुष्षष्ट्यधिकशततमोऽध्यायः ।

---

## पञ्चषष्ट्यधिकशततमोऽध्यायः

### प्रलयकालनर्णनम् ।

मत्स्य उवाच ।

भूत्वा नारायणो योगी सत्वमूर्तिर्विभावसुः !
गभस्तिभिः प्रदीप्ताभिः संशोषयति सागरान् ॥ १ ॥
पीत्वार्णवान् सर्वान् नदीः कूपांश्च सर्वशः । पर्वतनाञ्च सलिलं सर्वमादायरश्मिभिः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भित्वा गभस्तिभिश्चैव महीङ्गत्वा रसातलात् । पातालजलमादाय पिबन्तु रसमु
मूत्रासृक्क्लेदमन्यश्च यदस्ति प्राणिषु ध्रुवम् । तत् सर्वमरविन्दाक्षमादत्ते पुरो

वायुश्च भगवान् भूत्वा विधुन्वानोऽखिलं जगत् ।
प्राणापानसमानाद्यात् वायूनाकर्षते हरिः ॥ ५ ॥

ततो देवगणाः सर्वे भूतान्येव च यानि तु । गन्धोघ्राणं शरीरञ्च पृथिवीं संश्रितागु
जिह्वा रसश्च स्नेहश्च संश्रिताःसलिले गुणाः। रूपं चक्षुर्विपाकश्च ज्योतिरेवाश्रितागु
स्पर्शः प्राणश्च चेष्टा च पवनेसंश्रितागुणाः । शब्दः श्रोत्रञ्च खान्येव गगनेसंश्रितागु
लोकमाया भगवता मुहूर्त्तेन विनाशिता । मनोबुद्धिश्च सर्वेषां क्षेत्रज्ञश्चेति यः श्रुत
तं वरेण्यं परमेष्ठि हृषीकेशमुपाश्रिताः । ततो भगवतस्तस्य रश्मिभिः परिवारि
वायुनाक्रम्यमाणासु द्रुमशाखासुचाश्रिताः । तेषां सङ्घर्षणोद्भूतःपावकःशतधा
अदहच्च तदा सर्वं वृतः सम्वर्तकोऽनलः । सपर्वतद्रुमान् गुल्मान् लतावल्लीस्तृणानि

विमानानि च दिव्यानि पुराणि विविधानि च ।
यानि चाश्रयणीयानि तानि सर्वाणि सोऽदहत् ॥ १३ ॥

भस्मीकृत्वाततःसर्वान् लोकान्लोकगुरुर्हरिः । भूयोनिर्वापयामासयुगान्तेन च क
सहस्रवृष्टिः शतधा भूत्वा कृष्णो महाबलः । दिव्यतोयेन हविषा तर्पयामास मेदि
ततः क्षीरनिकायेन स्वादुना परमाम्भसा । शिवेन पुण्येन महींनिर्वाणमगमत् पर
तेन रोधेन संच्छन्ना पयसां वर्षतो धरा । एकार्णवजलीभूता सर्वसत्वविवर्जि
महासत्वान्यपि विभुं प्रष्टान्यमितौजसम् । नष्टार्कपवनाकाशे सूक्ष्मे जगति संवृ

संशोषमात्मना कृत्वा समुद्रानपि देहिनः ।
दग्ध्वा संप्लाव्य च तथा स्वपित्येकः सनातनः ॥ १६ ॥

पौराणं रूपमास्थाय स्वपित्यमितविक्रमः । एकार्णवजलव्यापी योगी योगमुपा
अनेकानि सहस्राणि युगान्येकार्णवाम्भसि । न चैनं कश्चिदव्यक्तं व्यक्तं वेदितु
कश्चैव पुरुषोनाम किं योगःकश्चयोगवान् । असौ कियन्तं कालश्च एकार्णवविधि
करिष्यतीति भगवानिति कश्चिन्न बुध्यते । न द्रष्टा नैव गमिता न ज्ञाता नैव पा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्य न ज्ञायते किञ्चित्तन्मृते देवसत्तमम् ।
नमः क्षितिः पवनमपः प्रकाशं प्रजापतिं भुवनधरं सुरेश्वरम् ।
पितामहं श्रुतिनिलयमहामुनिं प्रशाम्य भूयः शयनं ह्यरोचयत् ॥ २४ ॥
इति श्री मत्स्यपुराणे प्रलयकालवर्णनं नाम पञ्चषष्ट्यधिकशततमोऽध्यायः ।

---

# षट्षष्ट्यधिकशततमोऽध्यायः

## यज्ञावतारवर्णनम् ।

### मत्स्य उवाच ।

...कार्णवीभूते शेते लोके महाद्युतिः । प्रच्छाद्यसलिलेनोर्वीं हंसो नारायणस्तदा ॥
...तो रजसो मध्ये महार्णवसरःसु वै । विरजस्कं महाबाहुमक्षयं ब्रह्म यं विदुः ॥२॥
...मरूपप्रकाशेन तमसा संवृतः प्रभुः । मनः सात्त्विकमाधाय यत्र तत् सत्यमासत ॥
...तथ्यं परं ज्ञानं भूतन्तद्ब्रह्मणापुरा ! रहस्यारण्यकोद्दिष्टं यच्चौपनिषदं स्मृतम् ॥
...यज्ञ इत्येतत् यत्परं परिकीर्तितम् । यश्चान्यः पुरुषाख्यः स्यात् स एव पुरुषोत्तमः॥
...च यज्ञकरा विप्रा येचर्त्विज इतिस्मृताः । अस्माद्देवपुरा भूता यज्ञेभ्यः श्रूयतां तथा॥

ब्रह्माणं प्रथमं वक्त्रादुद्गातारञ्च सागरम् ।
होतारमपि चाध्वर्युं बाहुभ्यामसृजत् प्रभुः ॥ ७ ॥

...णो ब्राह्मणाच्छंसि प्रस्तोतारञ्च सर्वशः । तौ मित्रावरुणौ पृष्ठात् प्रतिप्रस्तारमेव च
...दरात् प्रतिहर्त्तारं होतारञ्चैव पार्थिव ! । अच्छावाकमथोरुभ्यान्नेष्टारञ्चैव पार्थिव! ॥
...णिभ्यामथ चाग्नीध्रंसुब्रह्मण्यञ्च जानुतः । ग्रावस्तुतन्तु पादाभ्यामुन्नेतारञ्च याजुषम्
...वमेवैष भगवान् षोडशैव जगत्पतिः । प्रवक्तॄन् सर्वयज्ञानामृत्विजोऽसृजदुत्तमान् ॥
...एष वै वेदमयःपुरुषो यज्ञसंस्थितः । वेदाश्चैतन्मयाः सर्वे साङ्गोपनिषदक्रियाः ॥
...णित्येकार्णवे चैव यदाश्चर्यमभूत् पुरा । श्रूयन्तां तद्यथा विप्रा ! मार्कण्डेयकुतूहलम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गीर्णो भगवतस्तस्य कुक्षावेव महामुनिः । बहुवर्षसहस्रायुस्तस्यैव वरतेजसा ॥
अटंस्तीर्थप्रसङ्गेन पृथिवीतीर्थगोचरान् । आश्रमाणि च पुण्यानि देवतायतनानि च ॥

देशान् राष्ट्राणि चित्राणि पुराणि विविधानि च ।
जपहोमपरः शान्तस्तपोघोरं समास्थितः ॥ १६ ॥

मार्कण्डेयस्ततस्तस्य शनैर्वक्त्राद्विनिःसृतः । स निष्क्रामन्नचात्मानं जानीते देवमायया ॥
निष्क्रम्याप्यस्य वदनादेकार्णवमथो जगत् । सर्वतस्तमसाच्छन्नं मार्कण्डेयोऽन्ववैक्षत ॥
तस्योत्पन्नं भयन्तीव्रं संशयश्चात्मजीविते । देवदर्शनसंहृष्टो विस्मयं परमङ्गतः ॥

चिन्तयन् जलमध्यस्थो मार्कण्डेयोऽन्ववैक्षत ।
किन्तु स्यान्मम चिन्तेयं मोहःस्वप्नोऽनुभूयते ॥ २० ॥

व्यक्तमन्यतमोभावस्तेषां सम्भावितो मम । नहीदृशं जगत् क्लेशमयुक्तं सत्यमर्हति ॥
नष्टचन्द्रार्कपवने नष्टपर्वतभूतले । कतमः स्यादयं लोक इति चिन्तामवस्थितः ॥
ददर्श चापि पुरुषं स्वपन्तं पर्वतोपमम् । सलिलेऽर्द्धमथो मग्नं जीमूतमिव सागरे ॥

ज्वलन्तमिव तेजोभिर्गोयुक्तमिव भास्करम् ।
शर्वर्यां जाग्रतमिव भासन्तं स्वेन तेजसा ॥ २४ ॥

देवन्द्रष्टुमिहायातः को भवानिति विस्मयात् ।
तथैव स मुनिः कुक्षिं पुनरेव प्रवेशितः ॥ २५ ॥

सम्प्रविष्टः पुनःकुक्षिं मार्कण्डेयोऽतिविस्मयः । तथैव च पुनर्भूयो विजानन् स्वप्नदर्शनम् ॥
स तथैव यथा पूर्वं यो धरामटते पुरा । पुण्यतीर्थजलोपेतां विविधान्याश्रमाणि च ॥
क्रतुभिर्यजमानांश्च समाप्तवरदक्षिणान् । अपश्यद्देवकुक्षिस्थान् याजकान् शतशो द्विजान् ॥
सद्वृत्तमास्थिताः सर्वे वर्णाब्राह्मणपूर्वकाः । चत्वारश्चाश्रमाः सम्यग्यथोद्दिष्टामया ॥
एवं वर्षशतं साग्रं मार्कण्डेयस्य धीमतः । चरतः पृथिवीं सर्वान्न कुक्ष्यन्तः समीक्षितः ॥
ततः कदाचिदथ वै पुनर्वक्त्राद्विनिस्सृतः । गुप्तं न्यग्रोधशाखायां बालमेकं निरैक्षत ॥
तथैवैकार्णवजले नीहारेणावृताम्बरे । अव्यग्रः क्रीडते लोके सर्वभूतविवर्जिते ॥ ३२

स मुनिर्विस्मयाविष्टः कौतूहलसमन्वितः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वालमादित्यसङ्काशं नाशक्नोदभिवीक्षितुम् ॥ ३३ ॥
स चिन्तयंस्तथैकान्ते स्थित्वा सलिलसन्निधौ ।
पूर्वदृष्टमिदं मन्ये शङ्कितो देवमायया ॥ ३४ ॥
अगाधसलिले तस्मिन् मार्कण्डेयः सुविस्मयः ।
प्लवंस्तथार्त्तिमगमत् भयात् सन्त्रस्तलोचनः ॥ ३५ ॥
तस्मै भगवानाह स्वागतं बालयोगवान् । बभाषे मेघतुल्येन स्वरेण पुरुषोत्तमः ॥३६॥
माभै र्वत्स ! न भेतव्यमिहैवायाहि मेऽन्तिकम् ।
मार्कण्डेयोमुनिस्त्वाह बालन्तं श्रमपीडितः ॥ ३७ ॥

मार्कण्डेय उवाच ।

माम्नाम्ना कीर्तयति तपः परिभवन्मम । दिव्यं वर्षसहस्राख्यंधर्षयन्निवमेव यः ॥३८
वः समाचारो देवेष्वपि समोचितः । मां ब्रह्मापि हि देवेशो दीर्घायुरिति भाषते
शो घोरमासाद्य मामद्य त्यक्तजीवितः । मार्कण्डेयेति मामुक्त्वा मृत्युमीक्षितुमर्हति
एवमाभाष्य तं क्रोधान्मार्कण्डेयो महामुनिः ।
तथैव भगवान् भूयो बभाषे मधुसूदनः ॥ ४१ ॥

भगवानुवाच ।

अहं ते जनको वत्स ! हृषीकेशः पिता गुरुः ।
आयुःप्रदाता पौराणः किं मान्त्वन्नोपसर्पसि ॥ ४२ ॥
पुत्रकामः प्रथमं पिता तेऽङ्गिरसोमुनिः । पूर्वमाराधयामास तपस्तीव्रं समाश्रितः ॥
त्वां घोरतपसा प्रावृणोदमितौजसम् । उक्तवानहमात्मस्थं महर्षिममितौजसम् ॥
मुःसहते चान्यो यो न भूतात्मकात्मजः । द्रष्टुमेकार्णवगतं क्रीडन्तं योगवर्त्मना
हृष्टवदनो विस्मयोत्फुल्लोचनः । मूर्द्धिन बद्धाञ्जलिपुटो मार्कण्डेयो महातपाः
गोत्रे ततः प्रोच्य दीर्घायुर्लोकपूजितः । तस्मै भगवते भक्त्या नमस्कारमथाकरोत्

मार्कण्डेय उवाच ।

इच्छेयं तत्त्वतो मायामिमां ज्ञातुन्तवानघ ! ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यदेकार्णवमध्यस्थः शेषे त्वं बालरूपवान् ॥ ४८ ॥
किं संज्ञश्चैव भगवन्! लोके विज्ञायसे प्रभो!
तर्कये त्वां महात्मानं को ह्यन्यः स्थातुमर्हति ॥ ४९ ॥

श्रीभगवानुवाच ।

अहंनारायणो ब्रह्मन्! सर्वभूः सर्वनाशनः । अहं सहस्रशीर्षाख्यैर्यैः पदैरभिसंज्ञितः ॥
आदित्यवर्णः पुरुषो मखे ब्रह्ममयो मखः । अहमग्निर्हव्यवाहो यादसां पतिरव्ययः ॥
अहमिन्द्रपदे शक्रो वर्षाणां परिवत्सरः । अहं योगी युगाख्यश्च युगान्तावर्त एव च ॥
अहं सर्वाणि सत्वानि दैवतान्यखिलानि तु ।
भुजङ्गानामहं शेषो ताक्ष्र्यो वै सर्वपक्षिणाम् ॥ ५३ ॥
कृतान्तः सर्वभूतानां विश्वेषां कालसंज्ञितः । अहं धर्म्मस्तपश्चाहं सर्वाश्रमनिवासिनाम्
अहं चैव सरिद्दिव्या क्षीरोदश्च महार्णवः । यत्तत् सत्यं च परममहमेकः प्रजापतिः ॥
अहं सांख्यमहं योगोऽप्यहं तत्परमम्पदम् । अहमिज्या क्रिया चाहमहंविद्याधिपः स्मृ
अहं ज्योतिरहं वायुरहं भूमिरहं नभः । अहमापः समुद्राश्च नक्षत्राणि दिशो दश
अहं वर्षमहं सोमः पर्जन्योऽहमहं रविः । क्षीरोदसागरे चाहं समुद्रे वडवामुखः
वह्निः संवर्तको भूत्वा पिबंस्तोयमयं हविः । अहं पुराणः परमं तथैवाहं परायणम्
अहं भूतस्य भव्यस्य वर्तमानस्य सम्भवः ।
यत् किञ्चित् पश्यसे विप्र! यच्छृणोषि च किञ्चन ॥ ६० ॥
यल्लोके चानुभवसि तत् सर्वं मामनुस्मर । विश्वंसृष्टंमयापूर्वं सृज्यं चाद्यापि पश्यम
युगे युगे च स्रक्ष्यामि मार्कण्डेयाखिलं जगत् ।
तदेतदखिलं सर्वं मार्कण्डेयावधारय ॥ ६२ ॥
शुश्रूषुर्मम धर्मांश्च कुक्षौ चर सुखं मम । मम ब्रह्मा शरीरस्थो देवैश्च ऋषिभिः सह
व्यक्तमव्यक्तयोगं मामवगच्छासुरद्विषम् । अहमेकाक्षरो मन्त्रस्त्र्यक्षरश्चैव तारकः
परस्त्रिवर्गादोङ्कारस्त्रिवर्गार्थनिदर्शनः । एवमादिपुराणेशो वदन्नेव महामतिः ॥
वक्त्रमाहृतवानाशु मार्कण्डेयं महामुनिम् । ततो भगवतः कुक्षिं प्रविष्टो मुनिसत्तमः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स तस्मिन् सुखमेकान्ते शुश्रूषुर्हंसमव्ययम् ।
योऽहमेव विविधतनुं परिश्रितो महार्णवे व्यपगतचन्द्रभास्करे ।
शनैश्चरन् प्रभुरपि हंससंज्ञितोऽसृजं जगद्विरहितकालपर्यये ॥६७॥
...ति श्रीमत्स्यपुराणे मार्कण्डेयस्य भगवत्कुक्षिप्रवेशनं नाम षट्षष्ट्यधिकशततमोऽध्यायः

———

## सप्तषष्ट्यधिकशततमोऽध्यायः

### भगवन्नाभितः कमलोत्पत्तिवर्णनम् ।

मत्स्य उवाच ।

...र्णवः स विभुर्भूत्वा चारयामास वै तपः । च्छादयित्वात्मनो देहं यादसाङ्कुलसम्भवम्
...तो महात्मातिबलो मतिं लोकस्य सर्जने । महतां पञ्चभूतानां विश्वो विश्वमचिन्तयत्
...स्य चिन्तयमानस्य निर्वाते संस्थितेऽर्णवे । निराकाशे तोयमये सूक्ष्मे जगति गह्वरे
...सङ्क्षोभयामास सोऽर्णवं सलिलाश्रयः । अनन्तरोर्मिभिःसूक्ष्ममथच्छिद्रमभूत् पुरा
...न्ं प्रति तदोद्भूतो मारुतश्छिद्रसम्भवः । स लब्ध्वान्तरमक्षोभ्योव्यवर्धत समीरणः
...वर्द्धतावलवतावेगाद्विक्षोभितोऽर्णवः: । तस्यार्णवस्यक्षुब्धस्यतस्मिन्नम्भसि मन्थिते
कृष्णवर्त्मा समभवत् प्रभुर्वैश्वानरो महान् ।
ततः स शोषयामास पावकः सलिलं बहु ॥७॥
...या ज्वलनिर्धेश्छिद्रमभवद्विस्तृतं नभः । आत्मतेजोद्भवाः पुण्या आपोऽमृतरसोपमाः
...काशं च्छिद्रसम्भूतं वायुराकाशसम्भवः । आभ्यांसङ्घर्षणोद्भूतंपावकं वायुसम्भवम्
...ष्ट्वा प्रीतो महादेवो महाभूतविभावनः । दृष्ट्वा भूतानि भगवांल्लोकसृष्ट्यर्थमुत्तमम् ॥
...ह्मणो जन्मसहितं बहुरूपो व्यचिन्तयत् । चतुर्युगाभिसंख्याते सहस्रयुगपर्यये ॥११॥
बहुजन्मविशुद्धात्मब्रह्मणेह निरुच्यते ।
यत् पृथिव्यां द्विजेन्द्राणां तपसा भवितात्मना ॥१२॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ज्ञानं दृष्टन्तु विश्वार्थे योगिनां याति मुख्यताम् ।
तं योगवन्तं विज्ञाय सम्पूर्णैश्वर्यमुत्तमम् ॥१३॥
पदे ब्रह्मणि विश्वेशं न्ययोजयत योगवित् । ततस्तस्मिन् महातोये महीशो हरिरच्युत
स्वयं क्रीडंश्च विधिवन्मोदते सर्वलोककृत् । पद्मं नाभ्युद्भवं चैकं समुत्पादितवांस्त
सहस्रपर्णं विरजं भास्कराभं हिरण्मयम् ।
हुताशनज्वलितशिखोज्ज्वलत्प्रभमुपस्थितं शरदमलार्कतेजसम् ।
विराजते कमलमुदारवर्चसं महात्मनस्तनुरुहचारुदर्शनम् ॥१६॥
इति श्रीमत्स्यपुराणे कमलोत्पत्तिवर्णनं नाम सप्तषष्ट्यधिकशततमोऽध्यायः ।

---

# अष्टषष्ट्यधिकशततमोऽध्यायः

## ब्रह्मण उत्पत्तिवर्णनम् ।

मत्स्य उवाच ।

अथ योगवतां श्रेष्ठमसृजत् भूरितेजसम् । स्रष्टारं सर्वलोकानां ब्रह्माणं सर्वतोमुखम् ॥
यस्मिन् हिरण्मये पद्मे बहुयोजनविस्तृते । सर्वतेजोगुणमयं पार्थिवैर्लक्षणैर्वृतम् ॥२॥
तच्च पद्मं पुराणज्ञाः पृथिवीरूपमुत्तमम् । नारायणसमुद्भूतं प्रवदन्ति महर्षयः ॥३॥
या पद्मा सा रसा देवी पृथिवी परिचक्षते । ये पद्मसारगुरवस्तान् दिव्यान् पर्वतान् वि
हिमवन्तं च मेरुं च नीलं निषधमेव च । कैलासं मुञ्जवन्तं च तथान्यं गन्धमादनम् ।
पुण्यं त्रिशिखरञ्चैव कान्तं मन्दरमेव च । उदयं पिञ्जरं चैव विन्ध्यवन्तं च पर्वतम् ।
एते देवगणानाञ्च सिद्धानाञ्च महात्मनाम् ।
आश्रयाः पुण्यशीलानां सर्वकामफलप्रदाः ॥७॥
एतेषामन्तरे देशो जम्बूद्वीप इति स्मृतः ।
जम्बूद्वीपस्य संस्थानं यज्ञिया यत्र वै क्रिया ॥८॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एभ्यो यत् स्रवते तोयं दिव्यामृतरसोपमम् ।
दिव्यास्तीर्थशताधाराः सुरम्याः सरितः स्मृताः ॥६॥

...स्मृतानि यानि पद्मस्य केसराणिसमन्ततः । असंख्येयाः पृथिव्यास्ते विश्वेवै धातुपर्वताः
...यानि पद्मस्य पर्णानि भूरीणि तु नराधिप । ते दुर्गमाःशैलचितास्म्लेच्छदेशा विकल्पिताः
...न्यधोभागपर्णानि ते निवासास्तु भागशः । दैत्यानामुरगाणाञ्च पतङ्गानाञ्चपार्थिव॥
...तेषां महार्णवो यत्र तद्रसेत्यभिसंज्ञितम् । महापातककर्माणो मज्जन्ते यत्र मानवाः ॥
...पद्मस्यान्तरतो यत्तदेकार्णवगता मही । प्रोक्ताश्च दिक्षु सर्वासु चत्वारः सलिलाकराः
...एवं नारायणस्यार्थे मही पुष्करसम्भवा । प्रादुर्भावोऽप्ययं तस्मान्नाम्ना पुष्करसंज्ञितः
...तस्मात् कारणात्तज्ज्ञैः पुराणैः परमर्षिभिः । याज्ञियैर्वेददृष्टान्तैर्यज्ञे पद्मविधिः स्मृतः
...एवं भगवता तेन विश्वया धरया विधिः । पर्वतानां नदीनाञ्च ह्रदानां चैव निर्मितः ॥

विभुस्तथैवाप्रतिमप्रभावः प्रभाकराभो वरुणासितद्युतिः ।
शनैः स्वयम्भूः शयनं सृजत्तदा जगन्मयं पद्मविधिं महार्णवे ॥१८॥

इति श्रीमत्स्यपुराणे ब्रह्मणोऽनन्तरं देवदानवादीनां सृष्टिवर्णनं नामा-
ष्टषष्ट्यधिकशततमोऽध्यायः ।

---

## ऊनसप्तत्यधिकशततमोऽध्यायः

### मधुकैटभाख्यानवर्णनम् ।

मत्स्य उवाच ।

...तमस्तपसि सम्भूतो मधुर्नाम महासुरः । तेनैव च सहोद्भूतो रजसा कैटभस्ततः ॥
...तौ रजस्तमसौ विघ्नसम्भूतौ तामसौ गणौ । एकार्णवे जगत् सर्वं क्षोभयन्तौमहाबलौ
...दिव्यरक्ताम्बरधरौ श्वेतदीप्ताग्रदंष्ट्रिणौ । किरीटकुण्डलोदग्रौ केयूरवलयोज्वलौ ॥३ ॥
...महाविक्रमताम्राक्षौ पीनोरस्कौ महाभुजौ । महागिरेः संहननौ जङ्गमाविव पर्वतौ ॥
...नवमेघप्रतीकाशावादित्यसदृशाननौ । विद्युदाभौ गदाग्राभ्यां कराभ्यामतिभीषणौ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तौ पादयोस्तु विन्यासादुत्क्षिपन्ताविवार्णवम् ।
कम्पयन्ताविव हरिं शयानं मधुसूदनम् ॥ ६ ॥
तौ तत्र विचरन्तौ स्म पुष्करे विश्वतोमुखम् ।
योगिनां श्रेष्ठमासाद्य दीप्तं ददृशतुस्तदा ॥ ७ ॥
नारायणसमाज्ञातं सृजन्तमखिलाः प्रजाः । दैवतानि च विश्वानि मानसानसुरर्षी...
ततस्तावूचतुस्तत्र ब्रह्माणमसुरोत्तमौ । दीप्तौ मुमूर्षू संक्रुद्धौ रोषव्याकुलितेक्षणौ ॥
कस्त्वं पुष्करमध्यस्थः सितोष्णीषश्चतुर्भुजः ।
आधाय नियमं मोहादास्ते त्वं विगतज्वरः ॥ १० ॥
एह्यागच्छावयोर्युद्धं देहि त्वं कमलोद्भव ! ।
आवाभ्यां परमीशाभ्यामशक्तस्त्वमिहार्णवे ॥ ११ ॥
तत्र कश्चोद्भवस्तुभ्यं केन वासि नियोजितः । कःस्रष्टा कश्च ते गोप्ता केननाम्ना विधीयते...

ब्रह्मोवाच ।

एक इत्युच्यते लोकैरविचिन्त्यः सहस्रदृक् ।
तत्संयोगेन भवतोः कर्म नामावगच्छताम् ॥ १३ ॥

मधुकैटभावूचतुः ।

नावयोः परमं लोके किञ्चिदस्ति महामते !। आवाभ्यां छाद्यते विश्वंतमसा रजसाथ...
रजस्तमो मयावावामृषीणामवलम्बितौ । छाद्यमानो धर्म्मशीलौ दुस्तरौ सर्वदेहि...
आवाभ्यामुह्यते लोको दुष्कराभ्यां युगे युगे । आवामर्थश्च कामश्च यज्ञः स्वर्गपरि...
सुखंयत्रमुदा युक्तं यत्र श्रीः कीर्तिरेव च । येषां यत्काङ्क्षितं चैव तत्तदावांविनि...

ब्रह्मोवाच ।

यत्नाद्योगवतो दृष्ट्या योगः पूर्वं मयार्जितः ।
तं समाधाय गुणवत् सत्वं चास्मि समाश्रितः ॥ १८ ॥
यः परो योगमतिमान्योगाख्यः सत्वमेव च । रजसस्तमसश्चैव यः स्रष्टा विश्वसम्भ...
ततो भूतानिजायन्ते सात्विकानीतराणि च । स एव हि युवा नाशे वशी देवोहनि...

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वपन्नेव ततः श्रीमान् बहुयोजनविस्तृतम्। बाहुं नारायणो ब्रह्म कृतवानात्ममायया
कृष्यमाणौ ततस्तस्य बाहुना बाहुशालिनः। चेरतुस्तौ विगलितौ शकुनाविव पीवरौ॥
तातावाहतुर्गत्वा तदा देवं सनातनम्। पद्मनाभं हृषीकेशं प्रणिपत्य स्थितावुभौ ॥२३॥

जानीवस्त्वां विश्वयोनिं त्वामेकं पुरुषोत्तमम्।
त्वामावाम्पाहि हेत्वर्थमिदं नौ बुद्धिकारणम् ॥ २४ ॥

अमोघदर्शनः सत्वंयतस्त्वां विद्मशाश्वतम्। ततस्त्वामागतावावामभितः प्रसमीक्षितुम्
इच्छामोवरंदेव! त्वत्तोऽद्भुतमरिन्दम!। अमोघदर्शनोऽसित्वं नमस्तेसमितिञ्जय!॥

श्रीभगवानुवाच।

किमर्थमद्भुतं ब्रूथ वरं ह्यसुरसत्तमौ!। दत्तायुष्कौ पुनर्भूयोरहो जीवितुमिच्छथ ॥२७

मधुकैटभावूचतुः।

यस्मिन्न कश्चिन् मृतवान् देव! तस्मिन् प्रभो! वधम्।
तमिच्छावो वधं चैव त्वत्तो नोऽस्तु महाव्रत!॥ २८ ॥

श्रीभगवानुवाच।

बाढं युवान्तु प्रवरौ भविष्यत्कालसम्भवे।
भविष्यतो न सन्देहः सत्यमेतद्ब्रवीमि वाम् ॥ २६ ॥
वरं प्रदायाथ महासुराभ्यां सनातनो विश्ववरः सुरोत्तमः।
रजस्तमोवर्गभवायनौ यमौ ममन्थतावूरुतलेन वै प्रभुः ॥ ३० ॥

इति श्रीमत्स्यपुराणे मधुकैटभवरदानप्राप्तिवर्णनं नामोनसप्तत्यधिकशततमोऽध्यायः।

---

## सप्तत्यधिकशततमोऽध्यायः

### ब्रह्मणस्तपश्चर्यावर्णनम्।

मत्स्य उवाच।

हत्वा च तस्मिंस्तुमुले ब्रह्मा ब्रह्मविदाम्वरः। ऊर्द्ध्वबाहुर्महातेजास्तपो घोरं समाश्रितः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रज्वलन्निव तेजोभिर्भाभिः स्वाभिस्तमोनुदः । बभासे सर्वधर्म्मस्थः सहस्रांशुरिवांशुमान्
अथान्यद्रूपमास्थाय शम्भुर्नारायणोऽव्ययः । आजगाम महातेजा योगाचार्यो महायशाः
सांख्याचार्यो हि मतिमान् कपिलो ब्राह्मणो वरः ।
उभावपि महात्मानौ स्तुवन्तौ क्षेत्रतत्परौ ॥ ४ ॥
तौ प्राप्तावूचतुस्तत्र ब्रह्माणममितौजसम् । परावरविशेषज्ञौ पूजितौ च महर्षिभिः
ब्रह्मात्मदृढबन्धश्च विशालो जगदास्थितः । ग्रामणीः सर्वभूतानां ब्रह्मा त्रैलोक्यपूजितः
तयोस्तद्वचनं श्रुत्वा विप्रोऽभ्याहृतयोगवित् ।
त्रीनिमान् कृतवान् लोकान्यथेयं ब्रह्मणः श्रुतिः ॥ ७ ॥
पुत्रश्च सम्भवे चैकं समुत्पादितवानृषिः । तस्याग्रे वाग्यतस्तथौ ब्रह्माणमजमव्ययम्
सोत्पन्नमात्रो ब्रह्माणमुक्तवान् मानसः सुतः । किं कुर्मस्तव साहाय्यं ब्रवीतु भगवानृषिः

ब्रह्मोवाच ।

य एष कपिलो ब्रह्म नारायणमयस्तथा । वदते भवतस्तत्वं तत् कुरुष्व महामते
ब्रह्मणस्तु तदर्थन्तु तदा भूयः समुत्थितः । शुश्रूषुरस्मि युवयोः किं करोमि कृताञ्जलिः

श्रीभगवानुवाच ।

यत् सत्यमक्षरं ब्रह्मन्! अष्टादशविधन्तु तत् । यत् सत्यं यदृतं तत्तु परं पदमनुस्मर
एतद्वचो निशम्यैव ययौ स दिशमुत्तराम् । गत्वा च तत्र ब्रह्मत्वमगमत् ज्ञानतेजसा
ततो ब्रह्मा भुवन्नाम द्वितीयमसृजत् प्रभुः । सङ्कल्पयित्वा मनसा तमेव च महात्मना
ततः सोऽथ ब्रवीद्वाक्यं किं करोमि पितामह !। पितामहसमाज्ञातो ब्रह्माणं समुपस्थितः
ब्रह्माभ्यासन्तु कृतवान् भुवश्च पृथिवीं गतः ।
प्राप्तश्च परमंस्थानं स तयोः पार्श्वमागतः ॥ १६ ॥
तस्मिन्नपि गते पुत्रे तृतीयमसृजत् प्रभुः । सांख्यप्रवृत्तिकुशलं भूर्भुवं नामतो विभुः
गोपतित्वं समासाद्य तयोरेवागमद्गतिम् । एवं पुत्रास्त्रयोऽप्येते उक्ताः शम्भोर्महात्मनः
तान् गृहीत्वा सुतांस्तस्य प्रयातः स्वार्जिताङ्गतिम् ।
नारायणश्च भगवान् कपिलश्च यतीश्वरः ॥ १६ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ब्रह्मल्लतौ गतौ मुक्तौ ब्रह्मा तं कालमेव हि । ततो घोरतमम्भूयः संश्रितः परमं व्रतम्
न रेमेऽथ ततो ब्रह्मा प्रभुरेकस्तपश्चरन् ।
शरीरात्तां ततो भार्यां समुत्पादितवान् शुभाम् ॥ २१ ॥
तपसा तेजसा चैव वर्चसा नियमेन च । सदृशीमात्मनो देवीं समर्थां लोकसर्जने ॥
ततो जगाद त्रिपदाङ्गायत्रीं वेदपूजिताम् । सृजन् प्रजानां पतयः सागरांश्चासृजद्विभुः
ततो जगाद त्रिपदाङ्गायत्रीं वेदपूजिताम् । अपरांश्चैव चतुरोवेदान् गायत्रिसम्भवान् ।
आत्मनः सदृशान् पुत्रानसृजद्वै पितामहः ।
विश्वे प्रजानां पतयो येभ्यो लोका विनिःसृताः ॥२५॥
विश्वेशं प्रथमं तावन्महातापसमात्मजम् । सर्वमन्त्रहितं पुण्यं नाम्ना धर्मं स सृष्टवान्
दक्षं मरीचिमत्रिञ्च पुलस्त्यं पुलहं क्रतुम् । वसिष्ठं गौतमञ्चैव भृगुमङ्गिरसन्मनुम् ॥
अथैवाद्भुतमित्येते ज्ञेयाः पैतामहर्षयः । त्रयोदशगुणं धर्ममालभन्त महर्षयः ॥ २८ ॥
अदितिर्दितिर्दनुः काला अनायुः सिंहिकामुनिः । ताम्राक्रोधाथ सुरसाविनताकद्रुरेवच
दक्षस्यापत्यमेता वै कन्या द्वादश पार्थिव ! । मरीचेः कश्यपः पुत्रस्तपसा निर्मितःकिल
तस्मै कन्या द्वादशान्या दक्षस्ताः प्रददौ तदा ।
नक्षत्राणि च सोमाय तदा वै दत्तवानृषिः ॥ ३१ ॥
कृष्णादीनिसर्वाणिपुण्यानिरविनन्दन ! । लक्ष्मीमरुत्वतीसाध्याविश्वेशाचमताशुभा
देवी सरस्वती चैव ब्रह्मणा निर्मिताः पुराः । एताः पञ्च वरिष्ठा वै सुरश्रेष्ठाय पार्थिव!
दत्ता भद्राय धर्माय ब्रह्मणा विश्वकर्मणा । या रूपाढ्यवती पत्नी ब्रह्मणः कामरूपिणी ॥
सुरभिः सा हिता भूत्वा ब्रह्माणं समुपस्थिता ।
ततस्तामगमद् ब्रह्मा मैथुनं लोकपूजितः ॥ ३५ ॥
लोकसर्जनहेतुज्ञोगवामर्थाय सत्तमः । जज्ञिरे च सुतास्तस्यां विपुला धूमसन्निभाः ॥
सन्ध्याभ्रसङ्काशाः प्रादहंस्तिग्मतेजसः । ते रुदन्तो द्रवन्तश्च गर्हयन्तः पितामहम् ॥
रोदनाद्द्रवणाच्चैव रुद्रा इति ततः स्मृताः । निर्ऋतिश्चैव शम्भुर्वै तृतीयश्चापराजितः ।
मृगव्याधः कपर्दी च दहनोऽथ खरश्च वै । अहिर्बुध्न्यश्च भगवान् कपालीचापिपिङ्गलः


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सेनानीश्च महातेजा रुद्रास्त्वेकादश स्मृताः। तस्यामेव सुरभ्याश्च गावो यज्ञेश्वरा
प्रकृष्टाश्च तथा मायाः सुरभ्याः पशवोऽक्षराः। अजाश्चैव तु हंसाश्च तथैवामृतमुत्त

ओषध्यः प्रवरायाश्च सुरभ्यास्ताः समुत्थिताः।
धर्माल्लक्ष्मीस्तथा कामं साध्या साध्यान् व्यजायत ॥४२॥

भवश्च प्रभवञ्चैवहीशश्चासुरहं तथा। अरुण्यं चारुणिञ्चैव विश्वावसुबलध्रुवौ
हविष्यश्च वितानश्च विधानशमितावपि। वत्सरञ्चैव भूतिश्च सर्वासुरनिषूदनम्
सुपर्वाणं वृहत्कान्तिः साध्या लोकनमस्कृता। तमेवानुगता देवी जनयामास वै सु
वरं वै प्रथमन्देवं द्वितीयं ध्रुवमव्ययम्। विश्वावसुं तृतीयञ्च चतुर्थं सोममीश्वर
ततोऽनुरूपमायञ्च यमस्तस्मादनन्तरम्। सप्तमञ्च तथा वायुमष्टमन्निर्ऋतिं वसु
धर्मस्यापत्यमेतद्वै सुदेव्यां समजायत। विश्वेदेवाश्च विश्वायां धर्माज्जाता इति श्रु
दक्षश्चैव महाबाहुः पुष्करस्वन एव च। चाक्षुषस्तु मनुश्चैव तथा मधुमहोरगौ
विश्वन्तश्च वसुर्बाह्ला विस्कम्भश्चमहायशाः। गरुड़श्चातिसत्वौजा भास्करप्रतिम

विश्वान् देवान् देवमाता विश्वेशाजनयत् सुतान्।
मरुत्वती मरुत्वतो देवानजनयत् सुतान् ॥५१॥

अग्निं चक्षुरविर्ज्योतिः सावित्रं मित्रमेव च। अमरं शरवृष्टिञ्च सुकर्षञ्च महासु
विराजञ्चैव वाचञ्च विश्वावसुमतिं तथा। अश्वमित्रं चित्ररश्मिन्तथा निषधनं नृप
हूयन्तं वाडवञ्चैव चारित्रं मन्दपन्नगम्। वृहन्तं वै बृहद्रूपं तथा वै पूतनानुगम्

मरुत्वती पुरा जज्ञे एतान्वै मरुताङ्गणान्।
अदितिः कश्यपाज्जज्ञे आदित्यान् द्वादशैव हि ॥ ५५ ॥

इन्द्रो विष्णुर्भगस्त्वष्टा वरुणो ह्यर्यमा रविः। पूषा मित्रश्च धनदो धाता पर्जन्य ए
इत्येते द्वादशादित्या वरिष्ठास्त्रिदिवौकसः। आदित्यस्य सरस्वत्यांजज्ञातेद्वौ सुतौ
तपःश्रेष्ठौ गुणिश्रेष्ठौ त्रिदिवस्यापिसम्मतौ। दनुस्तु दानवान् जज्ञे दितिर्दैत्यान्व्यजा
काला तु वै कालकेयानसुरान् राक्षसांस्तु वै। अनायुषायास्तनया व्याधयःसुमह
सिंहिका ग्रहमातावै गन्धर्वजननीमुनिः। ताम्रा त्वप्सरसां माता पुण्यानांभारती

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

क्रोधायाः सर्वभूतानि पिशाचाश्चैव पार्थिव ! ।
जज्ञे यक्षगणांश्चैव राक्षसांश्च विशाम्पते ! ॥ ६१ ॥
[..]नुष्पदानि सत्वानि तथा गावस्तुसौरसाः । सुपर्णान् पक्षिणश्चैव विनताचाप्यजायत
[..]धरान् सर्वनागान् देवी कद्रूर्व्यजायत । एवं वृद्धिं समगमन् विश्वे लोकाःपरन्तप !
[..] वै पौष्करो राजन् ! प्रादुर्भावोमहात्मनः । प्रादुर्भावः पौष्करस्तेमयाद्वैपायनेरितः
[..]णः पुरुषश्चैव मया विष्णुर्हरिः प्रभुः । कथितस्तेऽनुपूर्वेण संस्तुतः परमर्षिभिः ॥
यश्चेदमग्र्यं शृणुयात् पुराणं सदा नरः पर्वसु गौरवेण ।
अवाप्य लोकान् स हि वीतरागः परत्र च स्वर्गफलानि भुङ्क्ते ॥६६ ॥
[..]षा मनसा वाचा कर्म्मणाच्च चतुर्विधम् । प्रसादयति यः कृष्णं तंकृष्णोऽनुप्रसीदति
[..]ा च लभते राज्यमधनश्चोत्तमन्धनम् । क्षीणायुर्लभते चायुः पुत्रकामः सुतन्तथा
यज्ञा वेदास्तथा कामास्तपांसि विविधानि च ।
प्राप्नोति विविधं पुण्यं विष्णुभक्तो धनानि च ॥ ६६ ॥
[..]न् कामयते किञ्चित् तत्तल्लोकेश्वराद्भवे न् । सत्रं विहाय य इमं पठेत्पौष्करकं हरेः
[..]र्भावं नृपश्रेष्ठ ! न तस्य ह्यशुभं भवेत् । एष पौष्करको नाम प्रादुर्भावो महात्मनः
कीर्तितस्ते महाभाग ! व्यासश्रुतिनिदर्शनात् ॥ ७१ ॥
इति श्रीमत्स्यपुराणे पौष्करप्रादुर्भाववर्णनं नाम सप्तत्यधिकशततमोऽध्यायः ।

---

## एकसप्तत्यधिकशततमोऽध्यायः

### विष्णोःप्रादुर्भाववर्णनम् ।

मत्स्य उवाच ।
[..]णुत्वं शृणु विष्णोश्च हरित्वञ्च कृते युगे । वैकुण्ठत्वञ्च देवेषु कृष्णत्वं मानुषेषुच
[..]रस्य हितस्यैषा कर्म्मणांगहनागतिः । संप्रत्यतीतान् भव्यांश्चशृणुराजन् ! यथातथम्

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अव्यक्तो व्यक्तलिङ्गस्थो यएषभगवान् प्रभुः । नारायणोह्यनन्तात्मा प्रभवोऽव्यय
एष नारायणो भूत्वा हरिरासीत् सनातनः । ब्रह्मावायुश्चसोमश्च धर्म्मःशक्रोबृहस्
अदितेरपि पुत्रत्वं समेत्य रविनन्दन ! । एष विष्णुरितिख्यात इन्द्रस्यावरजो वि
प्रसादजं ह्यस्य विभोरदित्याः पुत्रकारणम् । बधार्थं सुरशत्रूणां दैत्यदानवरक्षसा
प्रधानात्मा पुरा ह्येष ब्रह्माणमसृजत् प्रभुः । सोऽसृजन् पूर्वपुरुषः पुराकल्पेप्रजा
असृजन्मानवांस्तत्र ब्रह्मवंशाननुत्तमान् । तेभ्योऽभवन्महात्मभ्यो बहुधाब्रह्म शा

एतदाश्चर्यभूतस्य विष्णोः कर्मानुकीर्तनम् ।
कीर्तनीयस्य लोकेषु कीर्त्यमानं निबोध मे ॥ ६ ॥

वृत्ते वृत्रबधे तत्र वर्तमाने कृते युगे । आसीत्त्रैलोक्यविख्यातः संग्रामस्तारकाम
यत्र ते दानवा घोराः सर्वे संग्रामदुर्जयाः । घ्नन्तिदेवगणान् सर्वान् सयक्षोरगराक्ष
ते बध्यमाना विमुखाः क्षीणप्रहरणा रणे । त्रातारं मनसा जग्मुर्देवं नारायणं प्र
एतस्मिन्नन्तरे मेघा निर्वाणाङ्गारवर्चसः । सार्कचन्द्रग्रहगणंच्छादयन्तो नभस्त
वेणुर्विद्युद्गणोपेता घोरनिह्रादकारिणः । अन्योन्यवेगाभिहताः प्रववुः सप्त मारु
दीप्ततोयाशनिघनैर्वज्रवेगानलानिलैः । रवैः सुघोरैरुत्पातैर्दह्यमानमिवाम्बरम् ॥ १

तत उल्कासहस्राणि निपेतुः खगतान्यपि ।
दिव्यानि च विमानानि प्रपतन्त्युत्पतन्ति च ॥ १६ ॥

चतुर्युगान्ते पर्याये लोकानां यद्भयं भवेत् । अरूपवन्ति रूपाणि तस्मिन्नुत्पातल
जातश्च निष्प्रभं सर्वं न प्राज्ञायत किञ्चन । तिमिरौघपरिक्षिप्ता न रेजुश्च दिशो
विवेश रूपिणी काली कालमेघावगुण्ठिता । द्यौर्नभात्यभिभूतार्का घोरेण तमसा

तान घनौघान् सतिमिरान् दोर्भ्यामाक्षिप्य स प्रभुः ।
वपुः स्वन्दर्शयामास दिव्यं कृष्णवपुर्हरिः ॥ २० ॥

बलाहकाञ्जनमिमं बलाहकतनूरुहम् । तेजसा वपुषा चैव कृष्णं कृष्णमिवाचलम् ॥
दीप्तपीताम्बरधरं तप्तकाञ्चनभूषणम् । धूमान्धकारवपुषं युगान्ताग्निमिवोत्थितम् ॥
चतुर्द्विगुणपीनांसङ्किरीटच्छन्नमूर्द्धजम् । बभौ चामीरप्रख्यैरायुधैरुपशोभितम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

...र्ककिरणोद्योतं गिरिकूटमिवोच्छ्रितम् । नन्दकानन्दितकरं शराशीविषधारिणम्॥
...विचित्रफलोदग्रशङ्खचक्रगदाधरम् । विष्णुशैलं क्षमामूलं श्रीवृक्षं शार्ङ्गधन्विनम् ॥
...योदारफलदं स्वर्गस्त्रीचारुपल्लवम् । सर्वलोकमनःकान्तं सर्वसत्वमनोहरम् ॥२६
...विमानविटपन्तोयदाम्बुमधुस्रवम् । विद्याहङ्कारसाराढ्यं महाभूतप्ररोहणम् ॥ २७ ॥
...षपत्रैर्निचितं ग्रहनक्षत्रपुष्पितम् । दैत्यलोकमहास्कन्धं मर्त्यलोके प्रकाशितम् ।२८
...राकारनिर्हादं रसातलमहाश्रयम् । मृगेन्द्रपाशैर्विततं पक्षजन्तुनिषेवितम् ॥ २९ ॥
...र्थवारुगन्धाढ्यं सर्वलोकमहाद्रुमम् । अव्यक्तानन्तसलिलं व्यक्ताहङ्कारफेनिलम् ॥
...भूततरङ्गौघं ग्रहनक्षत्रबुद्बुदम् । विमानगरुतव्याप्तं तोयदाडम्बराकुलम् ॥ ३१ ॥
...मनुसजनाकीर्णं शैलशङ्खकुलैर्युतम् । त्रैगुण्यविषयावर्तं सर्वलोकतिमिङ्गिलम् ॥३२
...वृक्षलतागुल्मं भुजगोत्कृष्टशैवलम् । द्वादशार्कमहाद्वीपं रुद्रैकादशपत्तनम् ॥ ३३ ॥
वस्वष्टपर्वतोपेतं त्रैलोक्याम्भोमहोदधिम् ।
सन्ध्यासङ्ख्योर्मिसलिलं सुपर्णानिलसेवितम् ॥ ३४ ॥
...रक्षोगणग्राहं यक्षोरगझषाकुलम् । पितामहमहावीर्य्यं सर्वस्त्रीरत्नशोभितम् ॥३५॥
...कीर्तिकान्तिलक्ष्मीभिर्नदीभिरुपशोभितम् । कालयोगिमहापर्वप्रलयोत्पत्तिवेगिनम्
...योगमहापारं नारायणमहार्णवम् । देवाधिदेवं वरदं भक्तानां भक्तिवत्सलम् ॥३७
...ग्रहकरं देवं प्रशान्तिकरणं शुभम् । हर्यश्वरथसंयुक्ते सुपर्णध्वजसेविते ॥ ३८ ॥
...चन्द्रार्करचिते मन्दराक्षवरावृते । अनन्तरश्मिभिर्युक्ते विस्तीर्णे मेरुगह्वरे ॥ ३९ ॥
...काचित्रकुसुमे ग्रहनक्षत्रबन्धुरे । भयेष्वभयदं व्योम्नि देवा दैत्यपराजिताः ॥ ४० ॥
...स्थितं देवं दिव्ये लोकमये रथे । ते कृताञ्जलयः सर्वे देवाः शक्रपुरोगमाः ॥४१॥
...नन्दं पुरस्कृत्य शरण्यं शरणङ्गताः । स तेषां ताङ्गिरं श्रुत्वा विष्णुर्दैवतदैवतम् ॥
...चक्रे विनाशाय दानवानां महामृधे । आकाशे तु स्थितो विष्णुरुत्तमं वपुरास्थितः
...च देवताः सर्वाः सप्रतिज्ञमिदं वचः । शान्तिं व्रजत भद्रं वो मा भैष्ट मरुताङ्गणाः॥
जिता मे दानवाः सर्वे त्रैलोक्यं परिगृह्यताम् ।
ते तस्य सत्यसन्धस्य विष्णोर्वाक्येन तोषिताः ॥ ४५ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

देवाः प्रीतिं समाजग्मुः प्राश्यामृतमनुत्तमम् । ततस्तमः संहृतं तद्विनेशुश्च बलाहकाः ॥
प्रववुश्च शिवा वाताः प्रशान्ताश्च दिशो दश ।
शुद्धप्रभाणि ज्योतींषि सोमश्चक्रुः प्रदक्षिणम् ॥ ४७ ॥
न विग्रहं ग्रहाश्चक्रुः प्रशान्ताश्चापि सिन्धवः । विरजस्का भवन्मार्गा नाकवर्गादय
यथार्थमूहुः सरितो नापिचुक्षुभिरेऽर्णवाः । आसंश्छुभानीन्द्रियाणि नराणामन्तरा
महर्षयो वीतशोका वेदानुच्चैरधीयत । यज्ञेषु च हविः पाकं शिवमाप च पावकः ॥
प्रवृत्तधर्माः संवृत्ता लोका मुदितमानसाः । विष्णोर्दत्तप्रतिज्ञस्य श्रुत्वारिनिधने गि

इति श्रीमत्स्यपुराणे विष्णोःप्रादुर्भाववर्णनं नामैकसप्तत्यधिकशततमोऽध्यायः ॥

———

## द्विसप्तत्यधिकशततमोऽध्यायः

### दैत्यसैन्यविस्तारवर्णनम् ।

मत्स्य उवाच ।

ततो भयं विष्णुवचः श्रुत्वा दैत्याश्च दानवाः । उद्योगविपुलं चक्रुर्युद्धाय विजयाय
मयस्तु काञ्चनमयं त्रिनल्वायतमक्षयम् । चतुश्चक्रं सुविपुलं सुकल्पितमहायुगम् ॥
किङ्किणीजालनिर्घोषं द्वीपिचर्मपरिष्कृतम् । रुचिरं रत्नजालैश्च हेमजालैश्च शोभितम्
ईहामृगगणाकीर्णं पक्षिपङ्क्तिविराजितम् । दिव्यास्त्रतूणीरधरं पयोधरविनादितम् ॥
स्वक्षं रथवरोदारं सूपस्थं गगनोपमम् । गदापरिघसंपूर्णं मूर्तिमन्तमिवार्णवम् ॥
हेमकेयूरवलयं स्वर्णमण्डलकूबरम् । सपताकध्वजोपेतं सादित्यमिव मन्दरम् ॥
गजेन्द्राभोगवपुषं क्वचित् केसरिवर्चसम् । युक्तमृक्षसहस्रेण समृद्धाम्बुदनादितम् ॥
दीप्तमाकाशगं दिव्यं रथं पररथारुजम् । अध्यतिष्ठद्रणाकाङ्क्षी मेरुं दीप्तमिवांशुमान्
तारमुत्क्रोशविस्तारं सर्वं हेममयं रथम् । शैलाकारमसम्बाधं नीलाञ्जनचयोपमम् ॥
कार्ष्णायसमयं दिव्यं लोहेषाबद्धकूबरम् । तिमिरोद्गारिकिरणं गर्जन्तमिव तोयद

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जालेन महता सगवाक्षेण दंशितम् । आयसैः परिघैः पूर्णं क्षेपणीयैश्च मुद्गरैः ॥११॥
ः पाशैश्च विततैर्नरसंयुक्तकण्टकैः । शोभितं त्रासयानैश्च तोमरैश्च परश्वधैः ॥१२॥
न्तं द्विषतां हेतोर्द्वितीयमिव मन्दरम् । युक्तं खरसहस्रेण सोऽध्यारोहद्रथोत्तमम्
रोचनस्तु संक्रुद्धो गदापाणिरवस्थितः । प्रमुखे तस्य सैन्यस्य दीप्तग्रह इवाचलः ॥
रथसहस्रेण हयग्रीवस्तु दानवः । स्यन्दनं वाहयामास सपत्नानीकमर्दनः ॥ १५ ॥
यतं किष्कुसाहस्रं धनुर्विस्फारयन्महत् । वाराहः प्रमुखे तस्थौ सप्ररोह इवाचलः ॥
स्तु विक्षरन्दर्पान्नेत्राभ्यां रोषजं जलम् । स्फुरद्दन्तोष्ठनयनं संग्रामं सोऽभ्यकाङ्क्षत
त्वष्टगजं घोरं यानमास्थाय दानवः । व्यूहितुं दानवव्यूहं परिचक्राम वीर्यवान् ॥
विचित्तिवपुश्चैव श्वेतकुण्डलभूषणः । श्वेतः श्वेतप्रतीकाशो युद्धायाभिमुखे स्थितः
ग्रीवलिपुत्रश्च वरिष्ठाद्रिशिलायुधः । युद्धायाभिमुखस्तस्थौ धराधरविकम्पनः ॥२०
शोरस्त्वभिसंर्षात् किशोर इति चोदितः । सबला दानवाश्चैव सन्नह्यन्ते यथाक्रमम्
वद्दैत्यसैन्यस्य मध्ये रविरिवोदितः । लम्बस्तु नवमेघाभः प्रलम्बाम्बरभूषणः ॥२२
व्यूहगतो भाति सनीहार इवांशुमान् । स्वर्भानुरास्ययोधी तु दशनौष्ठेक्षणायुधः ॥
तिष्ठति दैत्यानां प्रमुखे स महाग्रहः । अन्ये हयगतास्तत्र गजस्कन्धगताः परे ॥२४
स्याग्रगताश्चान्ये वराहर्क्षेषु चापरे । केचित् खरोष्ट्रयातारः केचिच्छ्वापदवाहनाः ॥
स्त्वपरे दैत्या भीषणा विकृताननाः । एकपादार्द्धपादाश्च ननृतुर्युद्धकाङ्क्षिणः ॥
स्फोटयन्तो बहवः क्ष्वेडन्तश्च तथापरे । हृष्टशार्दूलनिर्घोषा नेदुर्दानवपुङ्गवाः ॥२७॥
गदापरिघैरुग्रैः शिलामुसलपाणयः । बाहुभिः परिघाकारैस्तर्जयन्तिस्म देवताः ॥२८
ः प्रासैश्च परिघैस्तोमराङ्कुशपट्टिशैः । चिक्रीडुस्ते शतघ्नीभिः शतधारैश्च मुद्गरैः ॥
शैलैश्च शैलैश्च परिघैश्चोत्तमायसैः । चक्रैश्च दैत्यप्रवराश्चक्रुरानन्दितं बलम् ॥३०॥
नवसैन्यं तत्सर्वं युद्धमदोत्कटम् । देवानभिमुखे तस्थौ मेघानीकमिवोद्धतम् ॥

तदद्भुतं दैत्यसहस्रगाढं वाय्वग्निशैलाम्बुदतोयकल्पम् ।
बलं रणौघाभ्युदयेऽभ्युदीर्णं युयुत्सयोन्मत्तमिवावभासे ॥ ३२ ॥

इति श्रीमत्स्यपुराणे दैत्यसैन्यविस्तारवर्णनं नाम द्विसप्तत्यधिकशततमोऽध्यायः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# त्रिसप्तत्यधिकशततमोऽध्यायः

## सुरसैन्यविस्तारवर्णनम् ।

### मत्स्य उवाच ।

श्रुतस्ते दैत्यसैन्यस्य विस्तरो रविनन्दन !। सुराणामपि सैन्यस्य विस्तरं वैष्णवं शृणु
आदित्या वसवोरुद्रा अश्विनौच महाबलौ । सबलाः सानुगाश्चैव सन्नह्यन्त यथाक्रमम्
पुरुहूतस्तु पुरतो लोकपालाः सहस्रदृक् । ग्रामणीः सर्वदेवानामारुरोह सुरद्विपम् ॥३
मध्ये चास्य रथः सर्वपक्षिप्रवररंहसः ।
सुचारुचक्रचरणो हेमवज्रपरिष्कृतः ॥४॥
देवगन्धर्वयक्षौघैरनुयातः सहस्रशः । दीप्तिमद्भिः सदस्यैश्च ब्रह्मर्षिभिरभिष्टुतः ॥५
वज्रविस्फूर्जितोद्भूतैर्विद्युदिन्द्रायुधोदितैः । युक्तो बलाहकगणैः पर्वतैरिव कामगैः ॥६
यमारूढः स भगवान् पर्येति सकलं जगत् ।
हविर्धानेषु गायन्ति विप्रा मखमुखे स्थिताः ॥७॥
स्वर्गे शक्रानुयातेषु देवतूर्यनिनादिषु । सुन्दर्यः परिनृत्यन्ति शतशोऽप्सरसाङ्गणे ॥८
केतुना नागराजेन राजमानो यथा रविः । युक्तो हयसहस्रेण मतो मारुतरंहसा ॥९
सस्यन्दनवरोभाति गुप्तोमातलिना तदा । कृत्स्नः परिवृतो मेरुर्भास्करस्येव तेजसा ॥१०
यमस्तु दण्डमुद्यम्य कालयुक्तश्च मुद्गरम् । तस्थौ सुरगणानीके दैत्यान्नादेन भीषयन् ॥११
चतुर्भिः सागरैर्युक्तो लेलिहानैश्च पन्नगैः । शङ्खमुक्ताङ्गदधरो बिभ्रत्तोयमयं वपुः ॥१२
कालपाशान् समाविध्यन् हयैः शशिकरोपमैः ।
वाय्वीरितैर्जलाकारैः कुर्वन् लीलाः सहस्रशः ॥१३॥
पाण्डुरोद्धूतवसनः प्रचलन् रुचिराङ्गदः । मणिश्यामोत्तमवपुर्हरिभारार्पितोवरः ॥१४
वरुणः पाशधृङ्मध्ये देवानीकस्य तस्थिवान् । युद्धवेलामभिलषन् भिन्नवेल इवार्णवः ॥
यक्षराक्षससैन्येन गुह्यकानां गणैरपि । युक्तश्च शङ्खपद्माभ्यां निधीनामधिपः प्रभुः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[रा]जराजेश्वरः श्रीमान् गदापाणिरदृश्यत । विमानयोधी धनदो विमाने पुष्पके स्थितः

स राजराजः शुशुभे युद्धार्थी नरवाहनः ।

उक्षाणमास्थितः संख्ये साक्षादिव शिवः स्वयम् ॥१८॥

[पूर्व]पक्षः सहस्राक्षः पितृराजस्तु दक्षिणः । वरुणः पश्चिमं पक्षमुत्तरं नरवाहनः ॥१९॥

[च]तुर्युक्ताश्चत्वारो लोकपाला महाबलाः । स्वासु दिक्षुस्वरक्षन्त तस्य देवबलस्य ते

[सूर्य]ः सप्ताश्वयुक्तेन रथेनामितगामिना । श्रिया जाज्वल्यमानेन दीप्यमानैश्च रश्मिभिः

[उद]यास्तगचक्रेण मेरुपर्वतगामिना । त्रिदिवद्वारचक्रेण तपता लोकमव्ययम् ॥२२॥

[सहस्]ररश्मियुक्तेन भ्राजमानेन तेजसा । चचार मध्ये लोकानां द्वादशात्मा दिनेश्वरः ॥

सोमः श्वेतहये भाति स्यन्दने शीतरश्मिवान् ।

हिमवत्तोयपूर्णाभिर्भाभिराह्लादयञ्जगत् ॥२४॥

[ऋ]क्षपूगानुगतं शिशिरांशुं द्विजेश्वरम् । शशच्छायाङ्किततनुं नैशस्य तमसः क्षयम् ॥

[ज्यो]तिषामीश्वरं व्योम्नि रसानां रसदं प्रभुम् । ओषधीनां सहस्राणांनिधानममृतस्यच

[दान]वाः प्रथमं भागं सौम्यं सत्यमयं रथम् । ददृशुर्दानवाः सोमं हिमप्रहरणं स्थितम् ॥

यः प्राणः सर्वभूतानां पञ्चधा भिद्यते नृषु ।

सप्तधातुगतो लोकां स्त्रीन्दधार चचार च ॥२८॥

[यमाह]ुरग्निकर्तारं सर्वप्रभवमीश्वरम् । सप्तस्वरगतोयश्च नित्यङ्गीभिरुदीर्यते ॥ २९ ॥

[य]वदन्त्युत्तमं भूतं यं वदन्त्यशरीरिणम् । यमाहुराकाशगमं शीघ्रगंशब्दयोगिनम्॥३०॥

[स] वायुः सर्वभूतायुरुद्भूतः स्वेन तेजसा । ववौप्रव्यथयन् दैत्यान् प्रतिलोमंसतोयदः

[मरु]तो दिव्यगन्धर्वैर्विद्याधरगणैः सह । चिक्रीडुरसिभिः शुभ्रैर्निर्मुक्तैरिवपन्नगैः ॥३२॥

[सृज]न्तः सर्पपतयस्तीव्रतोयमयं विषम् । शरभूता दिवीन्द्राणाञ्चेरुर्व्यात्ताननाः दिवि ॥

[पर्वत]ैश्च शिलाशृङ्गैः शतशश्चैव पादपैः । उपतस्थुः सुरगणाः प्रहर्तुं दानवे बले ॥३४॥

[य]स्तेवोहृषीकेशः पद्मनाभस्त्रिविक्रमः । युगान्ते कृष्णवर्णाभो विश्वस्यजगतःप्रभुः ॥

सर्वयोनिः स मधुहा हव्यभुक् क्रतुसंस्थितः ।

भूम्यपोव्योमभूतात्मा श्यामः शान्तिकरोऽरिहा ॥३६॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अरिघ्नममरादीनाञ्चक्रं गृह्य गदाधरः। अर्कं नगादिवोद्यन्तमुद्यम्योत्तमतेजसा॥
सव्येनालम्ब्य महतीं सर्वासुरविनाशिनीम्। करेण कालीं वपुषा शत्रुकालप्रदां...
अन्यैर्भुजैः प्रदीप्ताभैर्भुजगारिध्वजः प्रभुः। दधारायुधजातानि शार्ङ्गादीनि महाबलः॥
सकश्यपस्यात्मभुवं द्विजं भुजगभोजनम्। पवनाधिकसम्पातं गगनक्षोभणं खगम्॥
भुजगेन्द्रेण वदने निविष्टेन विराजितम्।
अमृतारम्भनिर्मुक्तं मन्दराद्रिमिवोच्छ्रितम् ॥४१॥
देवासुरविमर्देषु बहुशोदृढविक्रमम्। महेन्द्रणामृतस्यार्थे वज्रेण कृतलक्षणम्॥
शिखिनं वलिनञ्चैव तप्तकुण्डलभूषणम्। विचित्रपत्रवसनन्धातुमन्तमिवाचलम्॥
स्फीतक्रोडावलम्बेन शीतांशुसमतेजसा। भोगिभोगावसिक्तेन मणिरत्नेन भास्वता॥
पक्षाभ्याञ्चारुपत्राभ्यामावृत्यदिविलीलया। युगान्तेसेन्द्रचापाभ्यान्तोयदाभ्यामिवाम्बरम्॥
नीललोहितपीताभिः पताकाभिरलङ्कृतम्।
केतुवेषप्रतिच्छन्नं महाकायनिकेतनम् ॥४६॥
अरुणावरजं श्रीमानारुह्य समरे विभुः। सुवर्णस्वर्णवपुषा सुपर्णं खेचरोत्तमम्॥
तमन्वयुर्देवगणा मुनयश्च समाहिताः। गीर्भिः परममन्त्राभिस्तुष्टुवुश्च जनार्दनम्॥
तद्वैश्रवणसंश्लिष्टं वैवस्वतपुरःसरम्। द्विजराजपतिक्षिप्तं देवराजविराजितम्॥
चन्द्रप्रभाभिर्विपुलं युद्धाय समवर्तत। स्वस्त्यस्तु देवेभ्य इति बृहस्पतिरभाषत।
स्वस्त्यस्तु दानवानीके उशना वाक्यमाददे ॥ ५० ॥
इति श्रीमत्स्यपुराणे सुरसैन्यविस्तारवर्णनं नाम त्रिसप्तत्यधिकशततमोऽध्यायः॥

---

## चतुःसप्तत्यधिकशततमोऽध्यायः

### देवासुरसंग्रामवर्णनम्।

मत्स्य उवाच।

ताभ्यां बलाभ्यां संजज्ञे तुमुलोविग्रहस्तदा। सुराणामसुराणाञ्च परस्परजयैषिणाम्॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[...]त्वा दैवतैः सार्द्धं नानाप्रहरणोद्यताः । समीयुर्युध्यमाना वै पर्वता इव पर्वतैः ॥२॥
[...]म् सुरासुरसंयुक्तं युद्धमत्यद्भुतं बभौ । धर्माधर्मसमायुक्तं दर्पेण विनयेन च ॥ ३ ॥
[...]रथैर्विप्रयुक्तैर्वारणैश्च प्रचोदितैः । उत्पतद्भिश्च गगनमसिहस्तैः समन्ततः ॥ ४ ॥
[...]प्यमाणैश्च मुसलैः सम्पतद्भिश्च सायकैः । चापैर्विस्फार्यमाणैश्च पात्यमानैश्च मुद्गरैः
[...]युद्धमभवद्घोरं देवदानवसङ्कुलम् । जगतस्त्रासजननं युगसंवर्तकोपमम् ॥ ६ ॥
[...]तमुक्तैश्च परिघैर्विप्रयुक्तैश्च पर्वतैः । दानवाः समरे जघ्नुर्देवानिन्द्रपुरोगमान् ॥ ७ ॥
[...]वध्यमाना बलिभिर्दानवैर्जयकाशिभिः । विषण्णवदना देवा जग्मुरार्तिं परां मृधे॥८॥
[...]स्त्रशूलप्रमथिताः परिघैर्भिन्नमस्तकाः । भिन्नोरस्का दितिसुतैर्वेमूरक्तं व्रणैर्बहु ॥९॥

वेष्टिताः शरजालैश्च निर्यत्नाश्चासुरैः कृताः ।
प्रविष्टा दानवीं मायान्न शेकुस्ते विचेष्टितुम् ॥ १० ॥

[...]लं गतमिवाभाति निष्प्राणसदृशाकृति । बलं सुराणामसुरैर्निष्प्रयत्नायुधं कृतम् ॥११

दैत्यचापच्युतान् घोरांश्छित्वा वज्रेण तांश्छरान् ।
शक्रो दैत्यबलं घोरं विवेश बहुलोचनः ॥ १२ ॥

[...]दैत्यप्रमुखान् हत्वा तद्दानवबलं महत् । तामसेनास्त्रजालेन तमोभूतमथाकरोत् ॥१३
[...]न्योन्यं नावबुध्यन्त देवानां वाहनानि च । घोरेण तमसाविष्टाः पुरुहूतस्य तेजसा॥
[...]मायापाशैर्विमुक्तास्तु यत्नवन्तः सुरोत्तमाः । वपूंषि दैत्यसिंहानान्तमोभूतान्यपातयन्॥
[...]ध्वस्ता विसंज्ञाश्च तमसा नीलवर्चसा । पेतुस्ते दानवगणाश्छिन्नपक्षा इवाद्रयः ॥
[...]घनीभूतदैत्येन्द्रमन्धकार इवार्णवे । दानवन्देवकदनन्तमोभूतमिवाभवत् ॥ १७ ॥
[...]सृजन्महामायां मयस्तां तामसीन्दहन् । युगान्तोद्योतजननीं सृष्टामौर्वेण वह्निना॥
[...] ददाह ततः सर्वान् मायामयविकल्पिता । दैत्याश्चादित्यवपुषः सद्य उत्तस्थुराहवे ॥
[...]मायामौर्वी समासाद्य दह्यमाना दिवौकसः । भेजिरे चेन्द्रविषयं शीतांशुं सलिलप्रदम्॥
[...]दह्यमाना ह्यौर्वेण वह्निना नष्टचेतसः । शशंसुर्वज्रिणं देवाः सन्तप्ताः शरणैषिणः ॥
[...]तते मायया सैन्ये हन्यमाने च दानवैः । चोदितो देवराजेन वरुणो वाक्यमब्रवीत् ॥

और्वो ब्रह्मर्षिजः शक्र! तपस्तेपे सुदारुणम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

और्वः स पूर्वतेजस्वी सदृशो ब्रह्मणो गुणैः ॥ २३ ॥

तं तपन्तमिवादित्यं तपसा जगदव्ययम्। उपतस्थुर्मुनिगणा दिव्या देवर्षिभिः सह।
हिरण्यकशिपुश्चैव दानवो दानवेश्वरः। ऋषिं विज्ञापयामासुः पुरा परमतेजसम्॥
ऊचुर्ब्रह्मर्षयस्तं तु वचनं धर्मसंहितम्। ऋषिवंशेषु भगवंश्छिन्नमूलमिदं पदम्॥
एकस्त्वमनपत्यश्च गोत्रायान्यो न वर्तते। कौमारं व्रतमास्थाय क्लेशमेवानुवर्तसे॥

बहूनि विप्र! गोत्राणि मुनीनां भावितात्मनाम्।
एकदेहानि तिष्ठन्ति विविक्तानि विना प्रजाः ॥ २८ ॥

एवमुच्छिन्नमूलैश्च पुत्रैर्नो नास्ति कारणम् भवांस्तु तपसा श्रेष्ठो प्रजापतिसमद्युतिः।
तत्र वर्तस्व वंशाय वर्द्धयात्मानमात्मना। त्वया धर्मोऽर्जितस्तेन द्वितीयाङ्कुरु वै तनुम्
स एवमुक्तो मुनिभिर्हौर्वो मर्मसु ताडितः। जगर्हे तान् ऋषिगणान् वचनं चेदमब्रवीत्
यथायं विहितो धर्मो मुनीनां शाश्वतस्तु सः। आर्षं वै सेवतः कर्म वन्यमूलफलाशिनः
ब्रह्मयोनौ प्रसूतस्य ब्राह्मणस्यात्मदर्शिनः। ब्रह्मचर्यं सुचरितं ब्रह्माणमपि चालयेत्

जनानां वृत्तयस्तिस्रो यद् गृहाश्रमवासिनाम्।
अस्माकन्तु वरं वृत्तिर्वनाश्रमनिवासिनाम् ॥ ३४ ॥

अब्भक्षा वायुभक्षाश्च दन्तोलूखलिनस्तथा। अश्मकुट्टा दश तथा पञ्चातपसहाश्च ये।
एते तपसि तिष्ठन्ति व्रतैरपि सुदुष्करैः। ब्रह्मचर्यं पुरस्कृत्य प्रार्थयन्ति परां गतिम्॥
ब्रह्मचर्याद् ब्राह्मणस्य ब्राह्मणत्वं विधीयते। एवमाहुः परे लोके ब्रह्मचर्यविदो जनाः

ब्रह्मचर्ये स्थितं धैर्यं ब्रह्मचर्ये स्थितं तपः।
ये स्थिता ब्रह्मचर्येषु ब्राह्मणा दिवि संस्थिता ॥ ३८ ॥
नास्ति योगं विना सिद्धिर्न वा सिद्धिं विना यशः।
नास्ति लोके यशो मूलं ब्रह्मचर्यात् परन्तपः ॥ ३९ ॥

यो निगृह्येन्द्रियग्रामं भूतग्रामं च पञ्चकम्। ब्रह्मचर्यं समाधत्ते किमतः परमं तपः॥
अयोगे केशधरणमसङ्कल्पव्रतक्रिया। अब्रह्मचर्ये चर्या च त्रयं स्याद् दम्भसंज्ञकम्॥
क्व दाराः क्व च संयोगः क्व च भावविपर्ययः। नन्वियं ब्रह्मणा सृष्टा मनसा मानसी प्रजा

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यद्यस्ति तपसो वीर्यं युष्माकं विदितात्मनाम् ।
सृजध्वं मानसान् पुत्रान् प्राजापत्येन कर्मणा ॥ ४३ ॥
मनसा निर्मिता योनिराधातव्या तपस्विभिः ।
न दारयोगो वीजं वा व्रतमुक्तं तपस्विनाम् ॥ ४४ ॥

यदिदं लुप्तधर्मार्थं युष्माभिरिह निर्भयैः । व्याहृतं सद्भिरत्यर्थमसद्भिरिव मे मतम् ॥
पुर्दीप्तान्तरात्मानमेतत् कृत्वा मनोमयम् । दारयोगं विना स्रक्ष्ये पुत्रमात्मतनूरुहम्
आत्मानमात्मा मे द्वितीयं जनयिष्यति । वन्येनानेन विधिना दिधिक्षन्तमिव प्रजाः
और्वस्तु तपसाविष्टोनिवेश्योरुं हुताशने । ममन्थैकेन दर्भेण सुतस्य प्रभवारणिम् ।४८।

तस्योरुं सहसा भित्वा ज्वालामाली ह्यनिन्धनः ।
जगतो दहनाकाङ्क्षी पुत्रोऽग्निः समपद्यत ॥ ४६ ॥

और्वस्योरुं विनिर्भिद्यऔर्वा नामान्तकोऽनलः । दिधक्षन्निव लोकांस्त्रीञ्जज्ञे परमकोपनः
उत्पन्नमात्रश्चोवाच पितरं श्लणया गिरा। क्षुधामे बाधते तात! जगद्भक्ष्ये त्यजस्वमाम्
त्रिदिवारोहिभिर्ज्वालैर्जृम्भमाणो दिशोदश। निर्दयन् सर्वभूतानिववृधे सोऽन्तकोऽनलः
तस्मिन्नन्तरे ब्रह्मा मुनिमूर्वं सभाजयन् । उवाच वार्यतां पुत्रो जगतश्च दयाङ्कुरु ॥५३।
अस्यापत्यस्य ते विप्र! करिष्ये स्थानमुत्तमम् । तथ्यमेतद्वचः पुत्र! शृणु त्वंवदताम्वरः

ऊर्व उवाच ।

धन्योऽस्म्यनुगृहीतोऽस्मि यन्मेऽद्य भगवांच्छिशोः । मतिमेतां ददातीह परमानुग्रहायवै

प्रभातकाले संप्राप्ते काङ्क्षितव्ये समागमे ।
भगवन्! तर्पितः पुत्रः कैर्हव्यैः प्राप्स्यते सुखम् ॥ ५६ ॥
कुत्र चास्य निवासः स्याद्भोजनं वा किमात्मकम् ।
विधास्यतीह भगवान् वीर्यतुल्यं महौजसः ॥ ५७ ॥

ब्रह्मोवाच ।

वडवामुखेऽस्य वसतिः समुद्रेवै भविष्यति । मम योनिर्जलं विप्र ! तस्य पीतवतः सुखम्
अहमास नियतं पिबन् वारिमयं हविः । तद्धविस्तव पुत्रस्य विसृजाम्यालयञ्च तत्॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ततो युगान्ते भूतानामेष चाहञ्च पुत्रक !। सहितौ विचरिष्यावो निष्पुत्राणामृणाप
एषोऽग्निरन्तकाले तु सलिलाशी मया कृतः। दहनः सर्वभूतानां सदेवासुररक्षसाम्
एवमस्त्विति तं सोऽग्निः संवृतज्वालमण्डलः। प्रविवेशार्णवमुखं प्रक्षिप्य पितरिप्र

प्रतियातस्ततो ब्रह्मा ये च सर्वे महर्षयः।
ऊर्वस्याग्नेः प्रभां ज्ञात्वा स्वां स्वाङ्गतिमुपाश्रिताः ॥ ६३ ॥

हिरण्यकशिपुर्दृष्ट्वा तदा तन्महदद्भुतम्। ऊच्चैः प्रणतसर्वाङ्गो वाक्यमेतदुवाच ह ॥ ६४
भगवन्नद्भुतमिदं संवृत्तं लोकसाक्षिकम्। तपसा ते मुनिश्रेष्ठ! परितुष्टः पितामहः ॥
अहन्तु तव पुत्रस्य तव चैव महाव्रत !। भृत्य इत्यवगन्तव्यः साध्यो यदिह कर्मणा
तन्मां पश्य समापन्नं तवैवाराधने रतम्। यदि सीदे मुनिश्रेष्ठ! तवैव स्यात् पराज

ऊर्व उवाच।

धन्योऽस्म्यनुगृहीतोऽस्मि यस्यतेऽहं गुरुःस्थितः। नास्तिमे तपसानेन भयमद्येहसुव्र
तामेव मायां गृह्णीष्व मम पुत्रेण निर्मिताम्। निरिन्धनामग्निमयीन्दुर्धर्षां पावकैरि

एषा ते स्वस्य वंशस्य वशगारिविनिग्रहे।
संरक्षत्यात्मपक्षञ्च विपक्षञ्च प्रधर्षति ॥ ७० ॥

एवमस्त्विति तां गृह्य प्रणम्य मुनिपुङ्गवम्। जगाम त्रिदिवं हृष्टः कृतार्थो दानवेश्व
एषा दुर्विषहा माया देवैरपि दुरासदा। और्वेण निर्मिता पूर्वं पावकेनोर्वसूनुना ॥
तस्मिंस्तु व्युत्थितेदैत्येनिर्वीर्यैषा न संशयः। शापोह्यस्याः पुरा दत्तोसृष्टायेनैवतेज

यद्येषा प्रतिहन्तव्या कर्त्तव्यो भगवान् सुखी।
दीयतां मे सखा शक्र ! तोययोनिर्निशाकरः ॥ ७४ ॥

तेनाहं सह सङ्गम्य यादोभिश्च समावृतः। मायामेतां हनिष्यामि त्वत्प्रसादान्नसं
इति श्रीमत्स्यपुराणे और्वनिर्मितमायावर्णनं नाम चतुःसप्तत्यधिकशततमोऽध्याय

———

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# पञ्चसप्तत्यधिकशततमोऽध्यायः

## देवासुरसंग्रामवर्णनम् ।

### मत्स्य उवाच ।

मस्त्विति संहृष्टः शक्रस्त्रिदशवर्धनः । सन्दिदेशाग्रतः सोमं युद्धाय शिशिरायुधम् ॥
सोम ! सहायत्वंकुरुपाशधरस्य वै । असुराणां विनाशाय जयार्थञ्चदिवौकसाम्
मत्तः प्रतिवीर्यश्च ज्योतिषाञ्चेश्वरेश्वरः । त्वन्मयं सर्वलोकेषु रसं रसविदो विदुः ।
वृद्धी तव व्यक्ते सागरस्येव मण्डले । परिवर्त्तस्यहोरात्रं कालं जगति योजयन् ॥
च्छायान्वयः लक्ष्म तवाङ्कः शशसन्निभः । न विदुः सोमदेवापि ये च नक्षत्रयोनयः
त्वमादित्यपथादूर्ध्वं ज्योतिषां चोपरि स्थितः ।
तमः प्रोत्सार्य सहसा भासयस्यखिलं जगत् ॥ ६ ॥
कालयोगात्माइष्टोयज्ञस्यसोऽव्ययः । औषधीशः क्रियायोनिरब्जयोनिरनुष्णभाः
तांशुरमृताधारश्चपलः श्वेतवाहनः । त्वं कान्तिःकान्तिवपुषात्वं सोमःसोमपायिनाम्
स्त्वं सर्वभूतानां तिमिरघ्नस्त्वमृक्षराट् । तद्गच्छ त्वं महासेन ! वरुणेन वरूथिना
शमयत्वासुरीं मायां यया दह्याम संयुगे ॥ ६ ॥

### सोम उवाच ।

वदसि युद्धार्थे देवराज ! वरप्रद ! । एवं वर्षामि शिशिरन्दैत्यमायापकर्षणम् ॥
एतान् मच्छीतनिर्दग्धान् पश्य स्वहिमवेष्टितान् ।
विमायान् विमदांश्चैव दैत्यसिंहान्महाहवे ॥ ११ ॥
हिमकरोत्सृष्टाः सपाशा हिमवृष्टयः । वेष्टयन्तिस्म तान् घोरान्दैत्यान्मेघगणाइव
पाशशीतांशुधरौ वरुणेन्दू महाबलौ । जघ्नतुर्हिमपातैश्च पाशपातैश्च दानवान् ॥१३॥
नाथौ समरे तौ पाशहिमयोधिनौ । मृधे चेरतुरम्भोभिः क्षुब्धाविव महार्णवौ ॥
माप्लावितं सैन्यं तद्दानवमदृश्यत । जगत् संवर्तकाम्भोदैः प्रविष्टैरिवसंवृतम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तावुद्यताम्बुनाथौ तु शशाङ्कवरुणावुभौ । शमयामासतुर्मायां देवौ दैत्येन्द्रनिर्मि
शीतांशुजालनिर्दग्धाः पाशैश्च स्पन्दिता रणे। न शेकुश्चलितुं दैत्या विशिरस्काइवा
शीतांशुनिहतास्ते तु दैत्यास्तोयहिमार्दिताः ।
हिमाप्लावितसर्वाङ्गा निरूष्माण इवाग्नयः ॥ १८ ॥
तेषान्तु दिवि दैत्यानां विपरीतप्रभाणि वै। विमानानि विचित्राणि प्रपतन्त्युत्पत
तान् पाशहस्तग्रथितांश्छादितांश्छीतरश्मिभिः । मयो ददर्शमायावी दानवान्दिवि
स शिलाजालविततां खड्गचर्माट्टहासिनीम् । पादपोत्कटकूटाग्रां कन्दराकीर्णका
सिंहव्याघ्रगणाकीर्णां नदद्भिर्गजयूथपैः। ईहामृगगणाकीर्णां पवनाघूर्णितद्रुमाम्
निर्मितां स्वेन यत्नेन कूजितां दिवि कामगाम् । प्रथितां पार्वतीं मायामसृजत्स
स्वासिशब्दैः शिलावर्षैः सम्पतद्भिश्च पादपैः । जघान देवसङ्घांश्च दानवांश्चाप्यजीव
नैशाकरी वारुणी च मायेऽन्तर्दधतुस्ततः ।
असिभिश्चायसगणैः किरन् देवगणान् रणे ॥ २५ ॥
साश्मयन्त्रायुधघना द्रुमपर्वतसङ्कटा । अभवत् घोरसञ्चार्या पृथिवी पर्वतैरिव
अश्मना प्रहताः केचित् शिलाभिः शकलीकृताः । नानिरुद्धो द्रुमगणैर्देवोऽदृश्यत क
तदपध्वस्तधनुषं भग्नप्रहरणाविलम् । निष्प्रयत्नं सुरानीकं वर्जयित्वा गदाधरम्
स हि युद्धगतः श्रीमानीशानोऽश्मव्यकम्पत। सहिष्णुत्वाज्जगत्स्वामी नचुक्रोधगदा
कालज्ञः कालमेघाभः समीक्षन् कालमाहवे । देवासुरविमर्दन्तु द्रष्टुकामस्तदा हरि
ततो भगवता दृष्टौ रणे पावकमारुतौ । चोदितौ विष्णुवाक्येन तौ मायामपकर्ष
ताभ्यामुद्भ्रान्तवेगाभ्यां प्रवृद्धाभ्यां महाहवे ।
दग्धा सा पार्वती माया भस्मीभूता ननाश ह ॥ ३२ ॥
सोऽनिलोऽनलसंयुक्तः सोऽनलश्चानिलाकुलः । दैत्यसेनान्ददहतुर्युगान्तेष्विवमू
वायुः प्रधावितस्तत्र पश्चादग्निस्तु मारुतम् । चेरतुर्दानवानीके क्रीडन्ताववनिला
भस्मावयवभूतेषु प्रपतत्सूत्पतत्सु च । दानवानां विमानेषु निपतत्सु समन्ततः
वातस्कन्धापविद्धेषु कृतकर्म्मणि पावके । मया वधे निवृत्ते तु स्तूयमाने गदाधरे

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पथतेषु दैत्येषु त्रैलोक्ये मुक्तबन्धने । संप्रहृष्टेषु देवेषु साधु साध्विति सर्वशः ॥
े दशशताक्षस्य दैत्यानाञ्च पराजये । दिक्षु सर्व्वासु शुद्धासु प्रवृत्ते धर्म्मविस्तरे ॥३८॥
ावृते चन्द्रमसि स्वस्थानस्थे दिवाकरे । प्रकृतिस्थेषु लोकेषु त्रिषु चारित्रबन्धुषु ॥
ानेषु भूतेषु प्रशान्तेषु च पाप्मसु । अभिन्नबन्धने मृत्यौ हूयमाने हुताशने ॥४०॥
शोभिषु देवेषु स्वर्गार्थं दर्शयत्सु च । लोकपालेषु सर्वेषु दिक्षु संयानवर्तिषु ॥४१॥
े तपसि सिद्धानामभावे पापकर्म्मणाम् । देवपक्षे प्रमुदिते दैत्यपक्षे विषीदति ॥४२
ादविग्रहे धर्मे अधर्मे पादविग्रहे । अपावृत्ते महाद्वारे वर्त्तमाने च सत्पथे ॥ ४३ ॥
के प्रवृत्ते धर्मेषु सुधर्मेष्वाश्रमेषु च । प्रजारक्षणयुक्तेषु भ्राजमानेषु राजसु ॥ ४४ ॥
न्तकल्मषे लोके शान्ते तमसि दानवे । अग्निमारुतयोस्तत्र वृत्ते संग्रामकर्म्मणि ॥
या विद्रुता लोकास्ताभ्यां तज्जयकृत्क्रिया । पूर्वदेवभयं श्रुत्वा मारुताग्निकृतंमहत्
नेमीति विख्यातो दानवः प्रत्यदृश्यत । भास्कराकारमुकुटः शिञ्जिताभरणाङ्गदः ॥

बाहुभिस्तुलयन् व्योम क्षिपन् पद्भ्यां महीधरान् ।
ईरयन्मुखनिश्वासैर्वृष्टियुक्तान् बलाहकान् ॥ ४८ ॥
तिर्यगायतरक्ताक्षं मन्दरोदग्रवर्चसम् ।
दिधक्षन्तमिवायान्तं सर्वान् देवगणान् मृधे ॥ ४९ ॥

यन्तं सुरगणांश्छादयन्तं दिशोदश । संवर्तकाले तृषितं दृष्टं मृत्युमिवोत्थितम् ॥
ेनोच्छ्रयवता विपुलाङ्गुलिपर्वणा । लम्बाभरणपूर्णेन किञ्चिच्चलितकर्म्मणा ॥५१॥
च्छ्रितेनाग्रहस्तेन दक्षिणेन वपुष्मता । दानवान् देवनिहतानुत्तिष्ठध्वमिति ब्रुवन् ॥५२
कालनेमिं समरे द्विषतां कालचेष्टितम् । वीक्षन्तेस्म सुराः सर्वे भयवित्रस्तलोचनाः
वीक्षन्तिस्म भूतानि क्रमन्तं कालनेमिनम् । त्रिविक्रमाधिकमतं नारायणमिवापरम्
त्युच्छ्रयपुरः पादमारुता घूर्णिताम्बरः । प्रक्रामन्नसुरो युद्धे त्रासयामास देवताः
येनासुरेन्द्रेण परिष्वक्तस्ततो रणे । कालनेमिर्बभौ दैत्यः स विष्णुरिव मन्दरः ॥
अथ विव्यथिरे देवाः सर्वे शक्रपुरोगमाः । कालनेमिं समायान्तं दृष्ट्वा कालमिवापरम् ।
इति श्रीमत्स्यपुराणे देवासुरसंग्रामवर्णनं नाम पञ्चसप्तत्यधिकशततमोऽध्यायः ।


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# षट्सप्तत्यधिकशततमोऽध्यायः

## कालनेमिवृत्तान्तवर्णनम्

मत्स्य उवाच ।

दानवानामनीकेषु कालनेमिर्महासुरः । विवर्द्धितमहातेजास्तपान्ते जलदो यथा ॥
तं त्रैलोक्यान्तरगतं दृष्ट्वा ते दानवेश्वराः । उत्तस्थुरपरिश्रान्ताः पीत्वामृतमनुत्तम
ते वीतभयसन्त्रासा मयतारपुरोगमाः । तारकामयसंग्रामे सततं जितकाशिनः ॥ ३
रेजुरायोधनगता दानवाः युद्धकाङ्क्षिणः । मन्त्रमभ्यसतान्तेषां व्यूहश्च परिधावता
प्रेक्षताश्चाभवत् प्रीतिर्दानवं कालनेमिनम् । ये तु तत्र मयस्यासन् मुख्या युद्धपुरःस

ते तु सर्वे भयन्त्यक्त्वा हृष्टा योद्धुमुपस्थिताः ।
मयस्तारो वराहश्च हयग्रीवश्च वीर्यवान् ॥ ६ ॥

विप्रचित्तिसुतः श्वेतः खरलम्बावुभावपि । अरिष्टो बलिपुत्रश्च किशोराख्यस्तथैव च
स्वर्भानुश्चामरप्रख्यो वक्त्रयोधी महासुरः । एतेऽस्त्रवेदिनः सर्वे सर्वेतपसिसुस्थि
दानवाः कृतिनो जग्मुः कालनेमिं तमुद्धतम् । ते गदाभिर्भुशुण्डीभिश्चक्रैरथ परश्वधैः
कालकल्पैश्च मुसलैः क्षेपणीयैश्च मुद्गरैः । अश्मभिश्चाद्रिसदृशैर्गण्डशैलैश्च दारुणैः
पट्टिशैर्भिन्दिपालैश्च परिघैश्चोत्तमायसैः । घातनीभिः सुगुर्वीभिः शतघ्नीभिस्तथैव
युगैर्यन्त्रैश्च निर्मुक्तैर्मार्गणैरुग्रताडितैः । दोर्भिश्चायतदीप्तैश्च प्रासैःपाशैश्च मूर्च्छनैः ॥
भुजङ्गवक्त्रैर्लेलिहानैर्विसर्पद्भिश्च सायकैः । वज्रैः प्रहरणीयैश्च दीप्यमानैश्च तोमरैः

विकोशैरसिभिस्तीक्ष्णैः शूलैश्च शितनिर्मलैः ।
दैत्याः संदीप्तमनसः प्रगृहीतशरासनाः ॥ १४ ॥
ततः पुरस्कृत्य तदा कालनेमिं महाहवे ।
सा दीप्तशस्त्रप्रवरा दैत्यानां रुरुचे चमूः ॥ १५ ॥

द्यौर्निमीलितसर्वाङ्गा घना नीलाम्बुदागमे । देवतानामपि चमूर्मुमुदे शक्रपालिता ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ता सितकृष्णाभ्यां ताराभ्यां चन्द्रसूर्ययोः । वायुवेगवती सौम्या तारागणपताकिनी
तदाविद्धवसना ग्रहनक्षत्रहासिनी । यमेन्द्रवरुणैर्गुप्ता धनदेन च धीमता ॥ १८ ॥
प्रदीप्ताग्निनयना नारायणपरायणा । सा समुद्रौघसदृशी दिव्या देवमहाचमूः ॥१९॥
नानास्त्रवती भीमा यक्षगन्धर्वशालिनी । तयोश्चम्वोस्तदानीन्तु बभूव स समागमः ॥

द्यावापृथिव्योः संयोगो यथा स्याद्युगपर्यये ।
तद्युद्धमभवद् घोरं देवदानवसङ्कुलम् ॥ २१ ॥

...पराक्रमपरं दर्पस्य विनयस्य च । निश्चक्रमुर्बलाभ्यान्तु भीमास्तत्र सुरासुराः ॥

पूर्वापराभ्यां संरब्धाः सागराभ्यामिवाम्बुदाः ।
ताभ्यां बलाभ्यां संहृष्टाश्चेरुस्ते देवदानवाः ॥ २३ ॥

...भ्यां पार्वतीयाभ्यां पुष्पिताभ्यांयथागजाः । समाजघ्नुस्ततोभेरीःशङ्खान्दध्मुरनेकशः
...ब्दोघां भुवं खञ्च दिशश्च समपूरयत् । ज्याघाततलनिर्घोषो धनुषां कूजितानि च
...नीताश्च निनदो दैत्यमन्तर्दधुः स्वनम् । तेऽन्योन्यमभिसम्पेतुः पातयन्तःपरस्परम्
...न्तु बाहुभिर्बाहून् द्वन्द्वमन्ये युयुत्सवः । देवास्तु चाशनिं घोरंपरिघांश्चोत्तमायसान्
...स्त्रिशान् ससृजुःसंख्ये गदागुर्वीश्च दानवाः । गदानिपातैर्भग्नाङ्गावाणैश्च शकलीकृताः
...नुर्भृशं केचित् पुनः केचित्तु जघ्निरे । ततो रथैः सतुरगैर्विमानैश्चाशुगामिभिः ॥
...न्योन्येसुसंरब्धा रोषादन्योन्यमाहवे । संवर्तमानाः समरे सन्दष्टौष्ठपुटाननाः ॥३०॥
...थैर्निरुध्यन्ते पादाताश्च पदातिभिः । तेषां रथानान्तुमुलः स शब्दः शब्दवाहिनाम्
...नभश्चहि यथानभस्यैर्जलदस्वनैः । बभञ्जुस्तु रथान् केचित्केचित् सम्पाटितारथैः

सम्बाधमन्ये सम्प्राप्य न शेकुश्चलितुं रथान् ।
अन्योन्यमन्ये समरे दोर्भ्यामुत्क्षिप्य दंशिताः ॥ ३३ ॥

...मानाभरणा जघ्नुस्तत्रापि चर्मिणः । अस्त्रैरन्ये विनिर्भिन्ना वेमू रक्तं हतायुधि ॥
...दानां सदृशाः जलदानां समागमे । तैरस्त्रशस्त्रग्रथितं क्षिप्तोत्क्षिप्तगदाविलम् ॥
...नवसंक्षुब्धं सङ्कुलं युद्धमाबभौ । तद्दानवमहामेघं देवायुधविराजितम् ॥ ३६ ॥
...न्यबाणवर्षेण युद्धदुर्दिनमाबभौ । एतस्मिन्नन्तरे क्रुद्धः कालनेमिः स दानवः ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

व्यवर्धत समुद्रौघैः पूर्यमाण इवाम्बुदः । तस्य विद्युच्चलापीडैः प्रदीप्ताशनिवर्षिभिः ।
गात्रैर्नागगिरिप्रख्या विनिपेतु र्बलाहकाः । क्रोधान्निश्वसतस्तस्य भ्रूभेदस्वेदवर्षिणः ।
साग्निस्फुलिङ्गप्रतता मुखान्निष्पेतुरर्चिषः । तिर्यगूर्ध्वञ्च गगने ववृधुस्तस्य बाहवः ।
पर्वतादिव निष्क्रान्ताःपञ्चास्या इव पन्नगाः । सोऽस्त्रजालैर्बहुविधैर्धनुभिः परिघै...
दिव्यमाकाशमावव्रे पर्वतैरुच्छ्रितैरिव । सोऽनिलोद्धूतवसनस्तस्थौ संग्राममालस...
सन्ध्यातपग्रस्तशिलः साक्षान्मेरुरिवाचलः । ऊरुवेगप्रमथितैः शैलशृङ्गाग्रपादपैः ।

अपातयद् देवगणान् वज्रेणेव महागिरीन् ।
बहुभिः शस्त्रनिस्त्रिंशैश्छिन्नभिन्नशिरोरुहाः ॥ ४४ ॥
न शेकुश्चलितुं देवाः कालनेमिहता युधि ।
मुष्टिभिर्निहताः केचित् केचित्तु विदलीकृताः ॥ ४५ ॥

यक्षगन्धर्वपतयः पेतुः सह महोरगैः । तेन वित्रासिता देवाः समरे कालनेमिना ।
न शेकुर्यत्नवन्तोऽपि यत्नं कर्तुं विचेतसः । तेन शक्रः सहस्राक्षः स्पन्दितः शर...
ऐरावतगतः संख्ये चलितुं न शशाक ह । निर्जलाम्भोदसदृशो निर्जलार्णवसप्रभः ।
निर्व्यापारः कृतस्तेन विपाशो वरुणोमृधे । रणोवैश्रवणस्तेन परिघैः कामरूपि...

वित्तदोऽपि कृतः संख्ये निर्जितः कालनेमिना ।
यमः सर्वहरस्तेन मृत्युप्रहरणे रणे ॥ ५० ॥
याम्यामवस्थां सन्त्यज्य भीतः स्वन्दिशमाविशत् ।
स लोकपालानुत्सार्य कृत्वा तेषाञ्च कर्म्म तत् ॥ ५१ ॥

दिक्षु सर्वासु देहं स्वं चतुर्धा विदधे तदा । स नक्षत्रपथङ्गत्वा दिव्यं स्वर्भानुदर्शि...

जहार लक्ष्मीं सोमस्य तं चास्य विषयं महत् ।
चालयामास दीप्तांशं स्वर्गद्वारात् स भास्करम् ॥ ५३ ॥
सायनश्चास्य विषयं जहार दिनकर्म्म च ।
सोऽग्निं देवमुखं दृष्ट्वा चकारात्ममुखाश्रयम् ॥५४॥
वायुश्च तरसा जित्वा चकारात्मवशानुगम् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स समुद्रान् समानीय सर्वाश्च सरितो बलात् ॥५५॥
...रात्मुखे वीर्याद्देहभूताश्च सिन्धवः । अपः स्ववशगाःकृत्वा दिविजा याश्च भूमिजाः
...स्वयम्भुवि वा भाति महाभूतपतिर्यथा । सर्वलोकमयो दैत्यः सर्वभूतभयावहः ॥
...लोकपालैकवपुश्चन्द्रादित्यग्रहात्मवान् । स्थापयामास जगतीं सुगुप्तां धरणीधरैः
...कानिलसम्पातो रराज युधि दानवः । पारमेष्ठ्ये स्थितः स्थानेलोकानां प्रभवोपमे
तं तुष्टुवुर्दैत्यगणा देवा इव पितामहम् ॥ ५६ ॥
...ति श्रीमत्स्यपुराणे कालनेमिवृत्तान्तवर्णनं नाम षट्सप्तत्यधिकशततमोऽध्यायः ।

———

# सप्तसप्तत्यधिकशततमोऽध्यायः

## कालनेमिना सह विष्णुयुद्धम्

मत्स्य उवाच ।

...नाभ्यवर्तन्त विपरीतेन कर्म्मणा । वेदो धर्म्मः क्षमा सत्यं श्रीश्च नारायणाश्रया
...तामनुपस्थानात् सक्रोधोदानवेश्वरः । वैष्णवंपदमन्विच्छन्ययौनारायणान्तिकम्
...दर्श सुपर्णस्थं शङ्खचक्रगदाधरम् । दानवानां विनाशाय भ्रामयन्तं गदां शुभाम् ॥
...म्भोदसदृशं विद्युत्सदृशवाससम् । स्वारूढं स्वर्णपक्षाढ्यं शिखिनंकाश्यपं खगम्
दृष्ट्वा दैत्यविनाशाय रणे स्वस्थमवस्थितम् ।
दानवो विष्णुमक्षोभ्यं बभाषे लुब्धमानसः ॥५॥
...स रिपुरस्माकं पूर्वेषां प्राणनाशनः । अर्णवावासिनश्चैव मधोर्वै कैटभस्य च ॥
...स विग्रहोऽस्माकमशाम्यः किल कथ्यते । अनेन संयुगेष्वद्य दानवाबहवो हताः
...स निर्घृणोलोके स्त्रीबालनिरपत्रपः । येन दानवनारीणां सीमन्तोद्धरणं कृतम् ॥
...सविष्णुर्देवानांवैकुण्ठश्चदिवौकसाम् । अनन्तोभोगिनामप्सुस्वपन्नाद्यः स्वयम्भुवः
अयं स नाथो देवानामस्माकं व्यथितात्मनाम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्य क्रोधं समासाद्य हिरण्यकशिपुर्हतः ॥१०॥
अस्य च्छायामुपाश्रित्य देवा मखमुखे श्रिताः ।
आज्यं महर्षिभिर्दत्तमश्नुवन्ति त्रिधा हुतम् ॥११॥

अयं स निधने हेतुः सर्वेषाममरद्विषाम् । यस्य चक्रे प्रविष्टानि कुलान्यस्माकमाहवे
अयं स किल युद्धेषु सुरार्थे त्यक्तजीवितः । सवितुस्तेजसा तुल्यं चक्रं क्षिपति
अयं सकालोदैत्यानांकालभूतःसमास्थितः । अतिक्रान्तस्यकालस्यफलंप्राप्स्यति के
दिष्ट्येदानीं समक्षं मे विष्णुरेष समागतः । अद्य मद्बाहुनिष्पिष्टो मामेव प्रणमि

यास्याम्यपचितिं दिष्ट्या पूर्वेषामद्य संयुगे ।
इमं नारायणं हत्वा दानवानां भयावहम् ॥१६॥

क्षिप्रमेव हनिष्यामि रणेऽमरगणांस्ततः । जात्यन्तरगतो ह्येष बाधते दानवान् मृधे
एषोऽनन्तः पुरा भूत्वा पद्मनाभ इति श्रुतः । जघानैकार्णवे घोरे तावुभौ मधुकैटभौ
द्विधाभूतं वपुः कृत्वा सिंहस्यार्द्धं नरस्य च । पितरं मे जघानैको हिरण्यकशिपुं पुरा
शुभं गर्भमधत्तैनमदितिर्देवतारणिः । त्रीन् लोकानुज्जहारैको क्रममाणस्त्रिभिः क्रमैः

भूयस्त्विदानीं संग्रामे संप्राप्ते तारकामये ।
मया सह समागम्य स देवो विनशिष्यति ॥२१॥

एवमुक्त्वा बहुविधं क्षिपन्नारायणं रणे । वाग्भिरप्रतिरूपाभिर्युद्धमेवाभ्यरोचयत् ॥२
क्षिप्यमाणो सुरेन्द्रेण न चुकोप गदाधरः । क्षमाबलेन महता सस्मितं चेदमब्रवी
अल्पं दर्पबलं दैत्य ! स्थिरमक्रोधजं बलम् । हतस्त्वं दर्पजैर्दोषैर्हित्वा यद्भाषसे ह
अधीरस्त्वं मम मतो धिगेतत्तव वाग्बलम् । न यत्र पुरुषाः सन्ति तत्र गर्जन्ति योषि

अहं त्वां दैत्य ! पश्यामि पूर्वेषां मार्गगामिनम् ।
प्रजापतिकृतं सेतुं भित्वा कः स्वस्तिमान् व्रजेत् ॥२६॥

अद्य त्वांनाशयिष्यामिदेवव्यापारघातकम् । स्वेषुस्वेषुचस्थानेषुस्थापयिष्यामि दै
एवं ब्रुवति वाक्यं तु मृधे श्रीवत्सधारिणि । जहासदानवःक्रोधाद्धस्तांश्चक्रे सहायु
स बाहुशतमुद्यम्य सर्वास्त्रग्रहणं रणे । क्रोधाद्द्विगुणरक्ताक्षो विष्णुवक्षस्यताड

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

...वाश्चापि समरे मयतारपुरोगमाः। उद्यतायुधनिस्त्रिंशा विष्णुमभ्यद्रवन् रणे ॥३०

स ताड्यमानोऽतिबलैर्दैत्यैः सर्वोद्यतायुधैः।

न चचाल ततो युद्धे कम्पमान इवाचलः ॥३१॥

...संसक्तश्च सुपर्णेन कालनेमी महासुरः। सर्वप्राणेन महतीं गदामुद्यम्य बाहुभिः ॥३२॥

...रां ज्वलन्तीं मुमुचे संरब्धो गरुडोपरि। कर्म्मणातेनदैत्यस्य विष्णुर्विस्मयमाविशत्

...दा तेन सुपर्णस्य पातिता मूर्द्धिन सा गदा। सुपर्णं व्यथितं दृष्ट्वा कृतञ्च वपुरात्मनः

...ोधसंरक्तनयनो वैकुण्ठश्चक्रमाददे। व्यवर्द्धत स वेगेन सुपर्णेन समं विभुः ॥३५॥

भुजाश्चास्य व्यवर्द्धन्त व्याप्नुवन्तो दिशो दश।

प्रदिशश्चैव खं गां वै पूरयामास केशवः ॥३६॥

...धे च पुनर्लोकान् क्रान्तुकाम इवौजसा। तर्जनायासुरेन्द्राणां वर्द्धमानं नभस्तले ॥

...षयश्चैव गन्धर्वास्तुष्टुवुर्मधुसूदनम्। सर्वान् किरीटेन लिहन् साभ्रमम्बरमम्बरैः ॥

...स्याक्रम्य वसुधां दिशः प्रच्छाद्य बाहुभिः। स सूर्यकरतुल्याभं सहस्रारमरिक्षयम् ॥

...ताग्निसदृशं घोरं दर्शनेन सुदर्शनम्। सुवर्णरेणुपर्यन्तं वज्रनाभं भयापहम् ॥४०॥

मेदोऽस्थिमज्जारुधिरैः सिक्तन्दानवसम्भवैः।

अद्वितीयप्रहरणं क्षुरपर्यन्तमण्डलम् ॥४१॥

...दाममालाविततं कामगं कामरूपिणम्। स्वयंस्वयम्भुवा सृष्टं भयदं सर्वविद्विषाम्

...र्षिरोषैराविष्टं नित्यमाहवदर्पितम्। क्षेपणाद्यस्य मुह्यन्ति लोकाः सस्थाणुजङ्गमाः ॥

...व्यादानि च भूतानि तृप्तिं यान्ति महामृधे। तदप्रतिमकर्मोग्रं समानं सूर्यवर्चसा ॥

...क्रमुद्यम्य समरे क्रोधदीप्तो गदाधरः। समुष्णन् दानवं तेजः समरे स्वेन तेजसा ॥

चिच्छेद बाहूंश्चक्रेण श्रीधरः कालनेमिनः।

तच्च वक्त्रशतं घोरं साग्निपूर्णाट्टहासि वै ॥४६॥

...स्य दैत्यस्य चक्रेण प्रममाथ बलाद्धरिः। स च्छिन्नबाहुर्विशिरा न प्राकम्पतदानवः

...न्धोऽवस्थितः संख्ये विशाखइव पादपः। सम्वितत्यमहापक्षौवायोःकृत्वासमञ्जवम्

...सा पातयामास तदा कालनेमिनम्। स तस्य देहो विमुखो विबाहुश्च परिभ्रमन् ॥

CC-0. Varanasi ... Collection. Digitized by eGangotri

निपपात दिवन्त्यक्त्वा क्षोभयन् धरणीतलम् । तस्मिन्निपतिते दैत्ये देवाः सर्षिगणास्तदा
साधु साध्विति वैकुण्ठं समेताः प्रत्यपूजयन् । अपसर्पन्तु दैत्याश्च युद्धे दृष्टपराक्रमाः

ते सर्वे बाहुभिर्व्याप्ता न शेकुश्चलितुं रणे ।

कांश्चित् केशेषु जग्राह कांश्चित् कण्ठेष्वपीडयन् ॥५२॥

चकर्ष कस्यचिद्वक्त्रं मध्येऽगृह्णादथापरम् । ते गदाचक्रनिर्दग्धा गतसत्वा गतासवः
गगनाद्भ्रष्टसर्वाङ्गा निपेतुर्धरणीतले । तेषु दैत्येषु सर्वेषु हतेषु पुरुषोत्तमः ॥
तस्थौ शक्रप्रियं कृत्वा कृतकर्मा गदाधरः । तस्मिन् विमर्दे निर्वृत्ते संग्रामे तारकामये
तं देशमाजगामाशु ब्रह्मा लोकपितामहः । सर्वैर्ब्रह्मर्षिभिः सार्द्धं गन्धर्वाप्सरसाङ्गणैः
देवदेवो हरिं देवं पूजयन् वाक्यमब्रवीत् । कृतं देव महत्कर्म सुराणां शल्यमुद्धृतम्

वधेनानेन दैत्यानां वयं च परितोषिताः ।

योऽयं त्वया हतो विष्णो ! कालनेमी महासुरः ॥५८॥

त्वमेकोऽस्य मृधे हन्ता नान्यः कश्चन विद्यते । एष देवान् परिभवन् लोकांश्च ससुरासुरान्
ऋषीणां कदनं कृत्वा मामपि प्रतिगर्जति । तदनेन तवाग्र्येण परितुष्टोऽस्मि कर्मणा
यदयं कालकल्पस्तु कालनेमी निपातितः । तदा गच्छस्व भद्रन्ते गच्छाम दिवमुत्तमाम्
ब्रह्मर्षयस्त्वां तत्रस्थाः प्रतीक्षन्ते सदोगताः । कश्चाहं तव दास्यामि वरं वरवताम्वर
सुरेष्वथ च दैत्येषु वराणां वरदो भवान् । निर्यातयैतत्त्रैलोक्यं स्फीतं निहतकण्टकम्

अस्मिन्नेव मृधे विष्णो ! शक्राय सुमहात्मने ।

एवमुक्तो भगवता ब्रह्मणा हरिरव्ययः ॥ ६४ ॥

देवांश्छक्रमुखान् सर्वानुवाच शुभया गिरा ।

विष्णुरुवाच ।

शृण्वन्तु त्रिदशाः सर्वे यावन्तोऽत्र समागताः ॥ ६५ ॥

श्रवणावहितैः श्रोत्रैः पुरस्कृत्य पुरन्दरम् । अस्माभिः समरे सर्वे कालनेमिमुखा हताः
दानवा विक्रमोपेताः शक्रादपि महत्तराः । अस्मिन्महति संग्रामे दैतेयौ द्वौ विनिःसृतौ
विरोचनश्च दैत्येन्द्रः स्वर्भानुश्च महाग्रहः । स्वां दिशं भजतां शक्रो दिशं वरुण एव च

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यांयमः पालयितामुत्तराश्च धनाधिपः। ऋक्षैः सह यथायोगं गच्छतां चैवचन्द्रमाः
दं ऋतुमुखे सूर्यो भजतामयनैः सह। आज्यभागाः प्रवर्तन्तां सदस्यैरभिपूजिताः॥
त्तामग्नयो विप्रैर्वेददृष्टेन कर्मणा। देवाश्चाप्यग्निहोमेन स्वाध्यायेन महर्षयः॥ ७१॥
द्धेन पितरश्चैव तृप्तिं यान्तु यथासुखम्। वायुश्चरतु मार्गस्थ स्त्रिधा दीप्यतु पावकः

त्रींस्तु वर्णांश्च लोकांस्त्रींस्तर्पयंश्चात्मजैर्गुणैः।
क्रतवः सम्प्रवर्तन्तां दीक्षणीयैर्द्विजातिभिः॥ ७३॥
दक्षिणाश्चोपपाद्यन्तां याज्ञिकेभ्यः पृथक् पृथक्।
गान्तु सूर्यो रसान् सोमो वायुः प्राणांश्च प्राणिषु॥७४॥

न्तः प्रवर्तन्तां सर्वएव स्वकर्मभिः। यथावदानुपूर्व्येण महेन्द्रमलयोद्भवाः॥ ७५॥
लोक्यमातरःसर्वाः समुद्रंयान्तु सिन्धवः। दैत्येभ्यस्त्यज्यतां भीश्च शांन्तिव्रजतदेवताः

स्वस्ति वोऽस्तु गमिष्यामि ब्रह्मलोकं सनातनम्।
स्वगृहे स्वर्गलोके वा संग्रामे वा विशेषतः॥ ७७॥
विश्रम्भो वो न मन्तव्यो नित्यं क्षुद्रा हि दानवाः।
छिद्रेषु प्रहरन्त्येते न तेषां संस्थिति र्ध्रुवा॥ ७८॥

यानामृजुभावानां भवतामार्जवन्धनम्। एवमुक्त्वा सुरगणान् विष्णुःसत्यपराक्रमः
म ब्रह्मणा सार्द्धं स्वलोकन्तु महायशाः। एतदाश्चर्यमभवत् संग्रामे तारकामये।

दानवानाञ्च विष्णोश्च यन्मान्त्वं परिपृष्टवान्॥ ८०॥

ति श्रीमत्स्यपुराणे कालनेमिवधवर्णनं नाम सप्तसप्तत्यधिकशततमोऽध्यायः।

---

# अष्टसप्तत्यधिकशततमोऽध्यायः

## भवमाहात्म्यवर्णनम्

ऋषय ऊचुः।

पद्मोद्भस्तात विस्तरेण त्वयेरितः। समासाद्भवमाहात्म्यं भैरवस्य विधीयताम्॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सूत उवाच ।

तस्यापि देवदेवस्य शृणुध्वं कर्म चोत्तमम् ।
आसीद्दैत्योऽन्धको नाम भिन्नाञ्जनचयोपमः ॥ २ ॥

तपसा महतायुक्तोह्यवध्य स्त्रिदिवौकसाम् । स कदाचिन् महादेवंपार्वत्या सहितंप्र
क्रीडमानं तदा दृष्ट्वा हर्तुं देवीं प्रचक्रमे । तस्य युद्धं तदा घोरमभवत् सह शम्भुना ।
आवन्त्ये विषये घोरे महाकालवनं प्रति । तस्मिन्युद्धे तदा रुद्रश्चान्धकेनातिपीडितः
सुषुवे वाणमत्युग्रनाम्ना पाशुपतं हि तत् । रुद्रावाणविनिर्भेदाद्रुधिरादन्धकस्य तु ।
अन्धकाश्च समुत्पन्नाः शतशोऽथ सहस्रशः । तेषां विदार्यमाणानां रुधिरादपरे पुनः
बभूवुरन्धका घोरा यैर्व्याप्तमखिलं जगत् । एवं मायाविनं दृष्ट्वा तश्च देवस्तदान्धकम्
पानार्थमन्धकास्त्रस्य सोऽसृजन्मातरस्तदा । माहेश्वरी तथाब्राह्मी कौमारी मालिनी

सौपर्णी ह्यथ वायव्या शाक्री वै नैऋती तथा ।
सौरी सौम्या शिवा दूती चामुण्डा चाथ वारुणी ॥१० ॥

वाराहीनारसिंहीच वैष्णवीच चलच्छिखा । शतानन्दाभगानन्दा पिच्छिलाभगमालि
बला चातिबला रक्ता सुरभीमुखमण्डिका । मातृनन्दा सुनन्दाच विडाली शकुनी त
रेवतीच महारक्ता तथैग पिलपिच्छिका । जयाच विजया चैव जयन्ती चापराजिता
काली चैव महाकाली दूती चैव तथैव च । सुभगा दुर्भगा चैव कराली नन्दिनी त
अदितिश्च दितिश्चैव मारीवै मृत्युरेव च । कर्णमोटी तथा ग्राम्या उलूकीव घटोद

कपाली वज्रहस्ता च पिशाची राक्षसा तथा ।
भुशुण्डी शाङ्करी चण्डा लाङ्गली कुटभी तथा ॥ १६ ॥

खेटा सुलोचना धूम्रा एकवीरा करालिनी । विशालदंष्ट्रिणी श्यामा त्रिजटीकुक्कुटि
वैनायकी च वैताली उन्मत्तोदुम्बरी तथा । सिद्धिश्च लेलिहाना च केकरी गर्दभी
भ्रुकुटी बहुपुत्रीच प्रेतयाना विडम्बिनी । क्रौञ्चा शैलमुखी चैव विनता सुरमा दनुः
उषा रम्भा मेनकाच सलिलाश्चित्ररूपिणी । स्वाहास्वधा वषट्कारा धृतिर्ज्येष्ठाकपर्दि
माया विचित्ररूपा च कामरूपा च सङ्गमा । मुखेविला मङ्गला च महानासा महा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कुमारी रोचनाभीमा सदाहा सा मदोद्धता। अलम्बाक्षी कालपर्णी कुम्भकर्णीमहासुरी
केशिनी शङ्खिनीलम्बा पिङ्गलालोहितामुखी। घण्टारवाथदंष्ट्राला रोचना काकजङ्घिका
गोकर्णिकाच मुखिकामहाग्रीवा महामुखी। उल्कामुखीधूमशिखा कम्पिनी परिकम्पिनी
मोहना कम्पनाक्ष्वेला निर्भया बाहुशाहिनी। सर्पकर्णी तथैकाक्षी विशोकानन्दिनीतथा
ज्योत्स्नामुखीच रभसा निकुम्भा रक्तकम्पना। अविकारा महाचित्रा चन्द्रसेना मनोरमा
अदर्शना हरत्पापा मातङ्गी लम्बमेखला। अवाला वञ्चना काली प्रमोदा लाङ्गलावती ॥

चित्ता चित्तजला कोणा शान्तिकाघविनाशिनी।
लम्बस्तनी लम्बसटा विसटा वासचूर्णिनी ॥ २८ ॥

स्खलन्ती दीर्घकेशीच सुचिरा सुन्दरी शुभा। अयोमुखी कटुमुखी क्रोधनीच तथाशनी

कुटुम्बिका मुक्तिका च चन्द्रिका बलमोहिनी।
सामान्या हासिनी लम्बा कोविदारी समासवी ॥ ३० ॥

शङ्कुकर्णी महानादा महादेवी महोदरी। हुङ्कारी रुद्रसुसटा रुद्रेशी भूतडामरी ॥ ३१ ॥

पिण्डजिह्वा चलज्ज्वाला शिवा ज्वालामुखी तथा।
एताश्चान्याश्च देवेशः सोऽसृजन्मातरस्तदा ॥ ३२ ॥

अन्धकानां महाघोराः पपुस्तद्रुधिरं तदा। ततोऽन्धकासृजः सर्वाः परां तृप्तिमुपागताः
तासु तृप्तासु संभूता भूय एवान्धकप्रजाः। अर्दितस्तैर्महादेवः शूलमुद्गरपाणिभिः ॥ ३४
ततः स शङ्करो देवस्त्वन्धकैर्व्याकुलीकृतः। जगाम शरणं देवं वासुदेवमजं विभुम् ॥

ततस्तु भगवान् विष्णुः सृष्टवान् शुष्करेवतीम्।
या पपौ सकलन्तेषामन्धकानामसृक् क्षणात् ॥
यथा यथा च रुधिरं पिबन्त्यन्धकसम्भवम् ॥ ३६ ॥

तथा तथाऽधिकं देवी संशुष्यति जनाधिप !। पीयमाने तथातेषामन्धकानां तथासृजि

अन्धकास्तु क्षयन्नीताः सर्वे ते त्रिपुरारिणा ॥ ३७ ॥

मूलान्धकन्तु विक्रम्य तदा शर्वस्त्रिलोकधृक्। चकार वेगाच्छूलाग्रे सचतुष्टावशङ्करम्
अन्धकस्तु महावीर्यस्तस्य तुष्टोऽभवद्भवः। तस्मै प्रादात् सामीप्यं प्रददौ नित्यं गणेशत्वं तथैव च

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ततो मातृगणाः सर्वे शङ्करं वाक्यमब्रुवन्। भगवन्! भक्षयिष्यामः स देवासुरमानुषम्।
त्वत्प्रसादाज्जगत् सर्वं तदनुज्ञातुमर्हसि।

शङ्कर उवाच।

भवतीभिः प्रजाः सर्वा रक्षणीया न संशयः॥ ४१॥

तस्माद्घोरानभिप्रायान्मनः शीघ्रं निवर्त्यताम्। इत्येवं शङ्करेणोक्तमनादृत्य वचस्तदा।
भक्षयामासुरत्युग्रास्त्रैलोक्यं सचराचरम्। त्रैलोक्ये भक्ष्यमाणे तु तदा मातृगणेन वै।
नृसिंहमूर्त्ति देवेशं प्रदध्यौ भगवाञ्छिवः। अनादिनिधनं देवं सर्वलोकभवोद्भवम्।
दैत्येन्द्रवक्षोरुधिरचर्चिताग्रमहानखम्। विद्युज्जिह्वं महादंष्ट्रं स्फुरत्केसरकण्टकम्।
कल्पान्तमारुतक्षुब्धं सप्तपर्णसमस्वनम्॥ ४५॥
वज्रतीक्ष्णनखं घोरमाकर्णव्यादिताननम्। मेरुशैलप्रतीकाशमुदयार्कसमेक्षणम्॥ ४६॥
हिमाद्रिशिखराकारं चारुदंष्ट्रोज्ज्वलाननम्। नखनिःसृतरोषाग्निज्वालाकेसरमालिनम्।
वज्राङ्गदं सुमुकुटं हारकेयूरभूषणम्। श्रोणीसूत्रेण महता काञ्चनेन विराजितम्॥ ४८॥
नीलोत्पलदलश्यामं वासोयुगविभूषणम्। तेजसाक्रान्तसकलब्रह्माण्डागारसङ्कुलम्।
पवनं भ्राम्यमाणानां हुतहव्यवहार्चिषाम्। आवर्तसदृशाकारैः संयुक्तं देहलोमजैः॥ ५०॥
सर्वपुष्पविचित्राञ्च धारयन्तं महास्रजम्। स ध्यातमात्रो भगवान् प्रददौतस्य दर्शनम्।
यादृशेनैवरूपेण ध्याते रुद्रेण धीमता। तादृशेनैव रूपेण दुर्निरीक्ष्येण दैवतैः॥ ५२॥
प्रणिपत्य तु देवेशं तदा तुष्टाव शङ्करः।

शङ्कर उवाच।

नमस्तेऽस्तु जगन्नाथ! नरसिंहवपुर्धर! ॥५३॥
दैत्यनाथासृजापूर्ण! नखशक्तिविराजित!। ततः सकलसंलग्नहेमपिङ्गलविग्रह! ॥५४॥
नतोऽस्मिपद्मनाभ! त्वांसुरशक्र! जगद्गुरो!। कल्पान्ताम्भोदनिर्घोष! सूर्यकोटिसमप्रभ!
सहस्रयमसंक्रोध! सहस्रेन्द्रपराक्रम!। सहस्रधनदस्फीत! सहस्रवरुणात्मक! ॥५६॥
सहस्रकालरचित! सहस्रनियतेन्द्रिय!। सहस्रभूमिसद्धैर्य! सहस्रानन्त! मूर्तिमन्!
सहस्रचन्द्रप्रतिम! सहस्रग्रहविक्रम!। सहस्ररुद्रतेजस्क! सहस्रब्रह्मसंस्तुत! ॥ ५८॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सहस्रबाहुवर्गोग्र ! सहस्रास्य निरीक्षण ! । सहस्रयन्त्रमथन ! सहस्रवधमोचन ! ॥५६
अन्धकस्य विनाशाययाःसृष्टाःमातरो मया । अनादृत्य तु मद्वाक्यम्भक्षयन्त्यद्भुताःप्रजाः
कृत्वा ताश्च न शक्तोऽहं संहर्तुमपराजित ! । स्वयङ्कृत्वा कथन्तासांविनाशमभिकारये
एवमुक्तः स रुद्रेण नरसिंहवपुर्धरः । ससर्ज देवोजिह्वायास्तदावाणीश्वरीं हरिः ॥६२॥
हृदयाच्च तथा माया गुह्याच्च भवमालिनी । अस्थिभ्यश्च तथाकाली सृष्टापूर्वं महात्मना
यया तद्रुधिरम्पीतमन्धकानां महात्मनाम् । याचास्मिन्कथिता लोकेनामतःशुष्करेवती

द्वात्रिंशन्मातरः सृष्टा गात्रेभ्यश्चक्रिणा ततः ।
तासां नामानि वक्ष्यामि तानि मे गदतः शृणु ॥ ६५ ॥

सर्वास्तासु महाभागा घण्टाकर्णी तथैव च । त्रैलोक्यमोहिनी पुण्या सर्वसत्ववशङ्करी
तथा च चक्रहृदया पञ्चमी व्योमचारिणी । शङ्खिनी लेखिनी चैव कालसङ्कर्षणी तथा
इत्येताःपृष्ठगाराजन् ! वागीशानुचराः स्मृताः । सङ्कर्षणीतथाश्वत्थाबीजभावापराजिता
कल्याणी मधुदंष्ट्री च कमलोत्पलहस्तिका । इति देव्यष्टकं राजन् ! मायानुचरमुच्यते
अजिता सूक्ष्महृदया वृद्धा वेशाश्मदंशना । नृसिंहभैरवा बिल्वा गरुत्महृदया जया ॥
भवमालिन्यनुचरा इत्यष्टौ नृपमातरः । आकर्णनी सम्भटा च तथैवोत्तरमालिका ॥७१
ज्वालामुखी भीषणिकाकामधेनुश्चबालिका । तथापद्मकराराजन् ! रेवत्यनुचराःस्मृताः
अष्टौ महाबलाः सर्वा देवगात्रसमुद्भवाः । त्रैलोक्यसृष्टिसंहारसमर्थाः सर्वदेवताः ॥
ताः सृष्टमात्रादेवेन क्रुद्धामातृगणस्य तु । प्रधाविता महाराज ! क्रोधविस्फारितेक्षणाः
अविषह्यतमन्तासां दृष्टितेजः सुदारुणम् । तमेव शरणं प्राप्ता नृसिंहो वाक्यमब्रवीत् ॥
यथा मनुष्याः पशवः पालयन्तिचिरात् सुतान् । जयन्ति ते तथैत्राशु यथावैदेवतागणः
भवत्यस्तु तथालोकान्पालयन्तु मयेरिताः । मनुजैश्च तथा देवैर्यजध्वं त्रिपुरान्तकम् ॥
न च बाधा प्रकर्तव्या ये भक्तास्त्रिपुरान्तके । येच मां संस्मरन्तीह तेच रक्ष्याः सदानराः
बलिकर्म करिष्यन्ति युष्माकं ये सदा नराः । सर्वकामप्रदास्तेषां भविष्यध्वन्तथैवच
उच्छासनादिकं ये च कथयन्ति मयेरितम् । तेच रक्ष्याः सदालोकारक्षितव्यं मदासनम्
रौद्रीं चैव परां मूर्तिं महादेवः प्रदास्यति । युष्मन्मुख्या महादेव्यस्तदुक्तं परिरक्षथ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मया मातृगणः सृष्टो योऽयं विगतसाध्वसः ।
एष नित्यं विशालाक्ष्यो मयैव सह रंस्यते ॥८२॥
मया सार्द्धं तथा पूजां नरेभ्यश्चैव लप्स्यथ ।
पृथक् सुपूजिता लोकैः सर्वान् कामान् प्रदास्यथ ॥८३॥
शुष्कां संपूजयिष्यन्ति ये च पुत्रार्थिनो जनाः । तेषां पुत्रप्रदा देवी भविष्यन्तिनसं...
एवमुक्त्वा तु भगवान् सह मातृगणेन तु । ज्वालामालाकुलवपुस्तत्रैवान्तरधीयत ॥८...
तत्र तीर्थं समुत्पन्नं कृतशौचेति यज्जगुः । तत्रापि पूर्वजो देवो जगदार्तिहरो हरः ॥८...
रौद्रस्य मातृवर्गस्य दत्त्वा रुद्रस्तु पार्थिव । रौद्रां दिव्यां तनुं तत्रमातृमध्येव्यवस्थि...
सप्त ता मातरो देव्यः सार्द्धनारीनरः शिवः । निवेश्य रौद्रं तत् स्थानं तत्रैवान्तर्धीय...
स मातृवर्गस्य हरस्य मूर्त्तिर्यदा यदा याति च तत्समीपे ।
देवेश्वरस्यापि नृसिंहमूर्तेः पूजां विधत्ते त्रिपुरान्धकारिः ॥८६॥

इति श्रीमत्स्यपुराणे शङ्करकृतनृसिंहस्तुतिवर्णनं नामाष्टसप्तत्यधिकशततमोऽध्यायः ।

---

# ऊनाशीत्यधिकशततमोऽध्यायः

## वाराणस्या माहात्म्यम्

ऋषय ऊचुः ।

श्रुतोऽन्धकवधः सूत ! यथावत्त्वदुदीरितः ।
वाराणस्यास्तु माहात्म्यं श्रोतुमिच्छाम साम्प्रतम् ॥१॥
भगवान् पिङ्गलः केन गणत्वं समुपागतः । अन्नदत्त्वञ्च सम्प्राप्तो वाराणस्यां महाद्युति...
क्षेत्रपालः कथं जातः प्रियत्वञ्च कथङ्गतः । एतदिच्छाम कथितं श्रोतुं ब्रह्मसुत ! त्व...

सूत उवाच ।

शृणुध्वं वै यथा लेभे गणेशत्वं स पिङ्गलः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अन्नदत्वं च लोकानां स्थानं वाराणसी त्विह ॥४॥
र्णभद्रसुतः श्रीमानासीद्यक्षः प्रतापवान्। हरिकेश इतिख्यातो ब्रह्मण्यो धार्मिकश्च ह
स्य जन्मप्रभृत्यैव शर्वे भक्तिरनुत्तमा। तदासीत्तन्नमस्कारस्तन्निष्ठस्तत्परायणः ॥६॥
सीनश्च शयानश्च गच्छंस्तिष्ठन्ननुव्रजन्। भुञ्जानोऽथ पिबन्वापि रुद्रमेवान्वचिन्तयत्
वं युक्तमनसम्पूर्णभद्रः पिताब्रवीत्। न त्वां पुत्रमहं मन्येदुर्जातो यस्त्वमन्यथा ॥८
हि यक्ष कुलीनानामेतद्वृत्तं भवत्युत। गुह्यका वत यूयं वै स्वभावात् क्रूरचेतसः॥९॥
क्रव्यादाश्चैव किं भक्षा हिंसाशीलाश्च पुत्रक।
मैवं काषीर्नते वृत्तिरेवं दृष्टा महात्मना ॥१०॥
स्वयम्भुवा यथादिष्टा त्यक्तव्या यदि नो भवेत्।
आश्रमान्तरजं कर्म न कुर्युर्गर्हिणस्तु तत् ॥११॥
त्वा मनुष्यभावं च कर्मभि र्विविधैश्चर। यत्त्वमेवं विमार्गस्थो मनुष्याज्जात एवच ॥
यावद्विविधन्तेषां कर्म तज्जातिसंश्रयम्। मयापि विहितं पश्य कर्मैतन्नात्र संशयः ॥

सूत उवाच।

मुक्त्वा स तं पुत्रं पूर्णभद्रः प्रतापवान्। उवाचनिष्क्रमन्क्षिप्रंगच्छपुत्र! यथेच्छसि
स निर्गतस्त्यक्त्वा गृहं सम्बन्धिनस्तथा। वाराणसीं समासाद्यतपस्तेपे सुदुश्चरम्
णुभूतो ह्यनिमिषः शुष्ककाष्ठोपलोपमः। सन्नियम्येन्द्रियग्राममवातिष्ठत निश्चलः ॥
तस्यैवमनिशन्तत्परस्य तदा शिवः। सहस्रमेकं वर्षाणां दिव्यमप्यभ्यवर्तत ॥१७॥
वल्मीकेन समाक्रान्तो भक्ष्यमाणः पिपीलिकैः।
वज्रसूचीमुखैस्तीक्ष्णै र्विध्यमानस्तथैव च ॥१८॥
मांसरुधिरत्वक् च कुन्दशङ्खेन्दुसप्रभः। अस्थिशेषोऽभवच्छर्वं देवं वै चिन्तयन्नपि
एतस्मिन्नन्तरे देवी विज्ञापयत शङ्करम्।

देव्युवाच।

उद्यानं पुनरेवेह द्रष्टुमिच्छामि सर्वदा ॥२०॥
स्य देव माहात्म्यं श्रोतुं कौतूहलं हि मे। यतश्च प्रियमेतत्ते तथास्य फलमुत्तमम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इति विज्ञापितो देवः शर्वाण्या परमेश्वरः। शर्वः पृष्टोयथातथ्यमाख्यातुमुपचक्रमे
निर्जगाम च देवेशः पार्वत्या सह शङ्करः। उद्यानं दर्शयामास देव्या देवः पिनाकधृक्

देवदेव उवाच।

प्रोत्फुल्लनानाविधगुल्मशोभितं लताप्रतानावनतं मनोहरम्।
विरूढपुष्पैः परितः प्रियङ्गुभिः सुपुष्पितैः कण्टकितैश्च केतकैः ॥२४॥
तमालगुल्मैर्निचितं सुगन्धिभि सकर्णिकारैर्वकुलैश्च सर्वशः।
अशोकपुन्नागवरैः सुपुष्पितैर्द्विरेफमालाकुलपुष्पसञ्चयैः ॥२५॥
क्वचित् प्रफुल्लाम्बुजरेणुरूषितैर्विहङ्गमैश्चारुकलप्रणादिभिः।
विनादितं सारसमण्डनादिभिः प्रमत्तदात्यूहरुतैश्च वल्गुभिः ॥२६॥
क्वचिच्च चक्राह्वरवोपनादितं क्वचिच्च कादम्बकदम्बकैर्युतम्।
क्वचिच्च कारण्डवनादनादितं क्वचिच्च मत्तालिकुलाकुलीकृतम् ॥२७॥
मदाकुलाभिस्त्वमराङ्गनाभि र्निषेवितश्चारु सुगन्धिपुष्पम्।
क्वचित् सुपुष्पैः सहकारवृक्षैर्लतोपगूढैस्तिलकद्रुमैश्च ॥२८॥
प्रगीतविद्याधरसिद्धचारणं प्रवृत्तनृत्याप्सरसाङ्गणाकुलम्।
प्रहृष्टनानाविधपक्षिसेवितं प्रमत्तहारीतकुलोपनादितम् ॥२९॥
मृगेन्द्रनादाकुलसत्वमानसैः क्वचित् क्वचिद्द्वन्द्वकदम्बकैर्मृगैः।
प्रफुल्लनानाविधचारुपङ्कजैः सरस्तटाकैरुपशोभितं क्वचित् ॥३०॥
निविडनिचुलनीलं नीलकण्ठाभिरामं मदमुदितविहङ्गव्रातनादाभिरामम्।
कुसुमिततरुशाखालीनमत्तद्विरेफं नवकिशलयशोभाशोभितप्रान्तशाखम्।
क्वचिच्च दन्तिक्षतचारुवीरुधं क्वचिल्लतालिङ्गितचारुवृक्षकम्।
क्वचिद्विलासालसगामिबर्हिणं निषेवितं किं पुरुषव्रजैः क्वचित् ॥३२॥
पारावतध्वनिविकूजितचारुशृङ्गैरभ्रङ्कषैः सितमनोहरचारुरूपैः।
आकीर्णपुष्पनिकुरम्बविमुक्तहासैर्विभ्राजितं त्रिदशदेवकुलैरनेकैः ॥३३॥
फुल्लोत्पलागुरुसहस्रवितानयुक्तै स्तोयाशयैस्तमनुशोभितदेवमार्गम्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मार्गान्तरागलितपुष्पविचित्रभक्तिसम्बद्धगुल्मविटपैर्विहगैरुपेतम् ॥३४॥
तुङ्गाग्रै र्नीलपुष्पस्तबकभरनतप्रान्तशाखैरशोकै-
र्मत्तालिव्रातगीतश्रुतिसुखजननैर्भासितान्तर्मनोज्ञैः
रात्रौ चन्द्रस्य भासा कुसुमिततिलकैरैकतां सम्प्रयातं
च्छायासुप्तप्रबुद्धस्थितहरिणकुलालुप्तदर्भाङ्कुराग्रम् ॥३५॥
हंसानां पक्षपातप्रचलितकमलस्वच्छविस्तीर्णतोयम्
तोयानां तीरजातप्रविकचकदलीवाटनृत्यन्मयूरम् ।
मायूरैः पक्षचन्द्रैः क्वचिदपि पतितै रञ्जितक्ष्माप्रदेशम्
देशे देशे विकीर्णप्रमुदितविलसन्मत्तहारीतवृक्षम् ॥३६॥
सारङ्गैः क्वचिदपि सेवितप्रदेशं सच्छन्नं कुसुमचयैः क्वचिद्विचित्रैः ।
हृष्टाभिः क्वचिदपि किन्नराङ्गनाभिः क्षीबाभिः समधुरगीतवृक्षखण्डम् ॥३७
संसृष्टैः क्वचिदुपलिप्तकीर्णपुष्पैरावासैः परिवृतपादपं मुनीनाम् ।
आमूलात् फलनिचितैः क्वचिद्विशालैरुत्तुङ्गैः पनसमहीरुहैरुपेतम् ॥३८॥
फुल्लातिमुक्तकलतागृहसिद्धलीलं सिद्धाङ्गनाकनकनूपुरनादरम्यम् ।
रम्यप्रियङ्गुतरुमञ्जरिसक्तभृङ्गं भृङ्गावलीषु स्खलिताम्बुकदम्बपुष्पम् ॥३९॥
पुष्पोत्करानिलविघूर्णितपादपाग्रमग्रेसरो भुवि निपातितवंशगुल्मम् ।
गुल्मान्तरप्रभृतिलीनमृगासमूहं संमुह्यतान्तनुभृतामपवर्गदातृ ॥४०॥
चन्द्रांशुजालधवलैस्तिलकैर्मनोज्ञैः सिन्दूरकुङ्कुमकुसुम्भनिभैरशोकैः ।
चामीकराभनिचयैरथ कर्णिकारैः फुल्लारविन्दरचितं सुविशालशाखैः ॥४१
रजतपर्णाभैः क्वचिद्विद्रुमसन्निभैः । क्वचित्काञ्चनसङ्काशैः पुष्पैराचितभूतलम् ॥४२
पुन्नागेषु द्विजगणविरुतं रक्ताशोकस्तवकभरनमितम् ।
रम्योपान्तं श्रमहरपवनं फुल्लाब्जेषु भ्रमरविलसितम् ॥४३॥
सकलभुवनभर्ता लोकनाथस्तदानीन्तुहिनशिखरिपुत्र्याः सार्द्धमिष्टैर्गणेशैः ।
विविधतरुविशालं मत्तहृष्टान्यपुष्टमुपवनतरुरम्यं दर्शयामास देव्याः ॥४४॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

देव्युवाच ।

उद्यानं दर्शितं देव ! शोभया परया युतम् । क्षेत्रस्य तु गुणान् सर्वान्पुनर्वक्तुमिहार्हसि
अस्य क्षेत्रस्य माहात्म्यमविमुक्तस्य तत्तथा । श्रुत्वापि हि न मे तृप्तिरतो भूयोवदस्व

देवदेव उवाच ।

इदं गुह्यतमं क्षेत्रं सदा वाराणसी मम । सर्वेषामेव भूतानां हेतुर्मोक्षस्य सर्वदा ॥ ४७ ॥

अस्मिन् सिद्धाः सदा देवि ! मदीयं व्रतमास्थिताः ।
नानालिङ्गधरा नित्यं मम लोकाभिकाङ्क्षिणः ॥ ४८ ॥

अभ्यसन्ति परं योगं मुक्तात्मानो जितेन्द्रियाः । नानावृक्षसमाकीर्णे नानाविहगकूजिते
कमलोत्पलपुष्पाढ्यैः सरोभिः समलङ्कृते । अप्सरोगणगन्धर्वैः सदा संसेवितेऽपि
रोचते मे सदा वासोयेन कार्येण तच्छृणु । मन्मना मम भक्तश्च मयि सर्वार्पितक्रियः
यथा मोक्षमिहाप्नोति ह्यन्यत्र न तथा क्वचित् । एतन्मम परं दिव्यं गुह्याद्गुह्यतरं मह
ब्रह्मादयस्तु जानन्ति येऽपि सिद्धा मुमुक्षवः । अतः प्रियतमं क्षेत्रं तस्माच्चेह रतिर्मम
विमुक्तं न मया यस्मान्मोक्ष्यते वा कदाचन । महत् क्षेत्रमिदं तस्यादविमुक्तमिदंस्मृत
नैमिषेऽथ कुरुक्षेत्रे गङ्गाद्वारे च पुष्करे । स्नानात्संसेविताद्वापि न मोक्षः प्राप्यते य
इह संप्राप्यते येन तत एतद्विशिष्यते । प्रयागे च भवेन्मोक्ष इह वा मत्परिग्रहात् ॥

प्रयागादपि तीर्थाग्र्यादिदमेव महत् स्मृतम् ।
जैगीषव्यः परां सिद्धिं योगतः स महातपाः ॥५७ ॥
अस्य क्षेत्रस्य माहात्म्याद्भक्त्या च मम भावनात् ।
जैगीषव्यो महाश्रेष्ठो योगिनां स्थानमिष्यते ॥ ५८ ॥

ध्यायतस्तत्र मां नित्यं योगाग्निर्दीप्यते भृशम् । कैवल्यं परमं याति देवानामपिदुर्लभ
अव्यक्तलिङ्गैर्मुनिभिः सर्वसिद्धान्तवेदिभिः । इह संप्राप्यते मोक्षो दुर्लभो देवदानवैः
तेभ्यश्चाहं प्रयच्छामि भोगैश्वर्यमनुत्तमम् । आत्मनश्चैव सायुज्यमीप्सितं स्थानमेव
कुबेरस्तु महायक्षस्तथा शर्वार्पितक्रियः । क्षेत्रसम्वसनादेव गणेशत्वमवाप ह ॥ ६१

सम्वर्तो भविता यश्च सोऽपि भक्त्या ममैव तु ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इहैवाराध्य मां देवि ! सिद्धिं यास्यत्यनुत्तमाम् ॥ ६३ ॥

पाराशरसुतो योगी ऋषिर्व्यासो महातपाः । धर्मकर्त्ता भविष्यश्च वेदसंस्थाप्रवर्तकः ॥

रंस्यते सोऽपि पद्माक्षि ! क्षेत्रेऽस्मिन् मुनिपुङ्गवः ।

ब्रह्मा देवर्षिभिः सार्द्धं विष्णुर्वायुर्दिवाकरः ॥ ६५ ॥

देवराजस्तथा शक्रो येऽपि चान्ये दिवौकसः । उपासन्ते महात्मानः सर्वे मामेवसुव्रते

अन्येऽपि योगिनः सिद्धाश्छन्नरूपा महाव्रताः । अनन्यमनसोभूत्वा मामिहोपासतेसदा

अलर्कश्च पुरोमेतां मत्प्रसादादवाप्स्यति । स चैनां पूर्ववत्कृत्वा चातुर्वर्ण्याश्रमाकुलाम्

स्फीतां जनसमाकीर्णां भक्त्याच सुचिरंनृपः । मयि सर्वार्पितप्राणो मामेव प्रतिपत्स्यते

ततः प्रभृति चार्वङ्गि ! येऽपि क्षेत्रनिवासिनः ।

गृहिणो लिङ्गिनो वापि मद्भक्ता मत्परायणाः ॥ ७० ॥

मत्प्रसादाद्व्रजिष्यन्ति मोक्षं परमदुर्लभम् । विषयासक्तचित्तोऽपि त्यक्तधर्मरतिर्नरः ॥

इह क्षेत्रेमृतः सोऽपिसंसारंन पुनर्विशेत् । ये पुनर्निर्ममा धीराःसत्वस्था विजितेन्द्रियाः

व्रतिनश्च निरारम्भाः सर्वे ते मयि भाविताः । देहभङ्गं समासाद्य धीमन्तः सङ्गवर्जिताः

गता एव परं मोक्षं प्रसादान्मम सुव्रते ! ॥ ७३ ॥

जन्मान्तरसहस्रेषु युञ्जन् योगमवाप्नुयात् । तमिहैव परं मोक्षं मरणादधिगच्छति ।७४

एतत्सङ्क्षेपतो देवि ! क्षेत्रस्यास्य महत्फलम् । अविमुक्तस्य कथितं मया ते गुह्यमुत्तमम्

अतःपरतरं नास्ति सिद्धिगुह्यं महेश्वरि ! । एतद्बुध्यन्ति योगज्ञा ये च योगेश्वराभुवि ॥

एतदेव परं स्थानमेतदेव परं शिवम् । एतदेव परम्ब्रह्म एतदेव परम्पदम् ॥ ७७ ॥

वाराणसी तु भुवनत्रयसारभूता रम्या सदा मम पुरी गिरिराजपुत्रि ! ॥

अत्रागता विविधदुष्कृतकारिणोऽपि पापक्षयाद्विरजसः प्रतिभान्ति मर्त्याः ॥

एतत्स्मृतं प्रियतमं मम देवि ! नित्यं क्षेत्रं विचित्रतरुगुल्मलतासु पुष्पम् ।

अस्मिन्मृतास्तनुभृतः पदमाप्नुवन्ति मूर्खागमेन रहितापि न संशयोऽत्र७९॥

सूत उवाच ।

एतस्मिन्नन्तरे देवो देवीं प्राह गिरीन्द्रजाम् । दातुं प्रसादाद्यक्षाय वरं भक्ताय भामिनि॥

CC-0. Dr. Vasishtha Tripathi Collection. Digitized by eGangotri

भक्तो मम वरारोहे! तपसा हतकिल्बिषः। अहो वरमसौ लब्धमस्मत्तो भुवनेश्वरि!
एवमुक्त्वा ततो देवः सह देव्या जगत्पतिः। जगाम यक्षो यत्रास्ते कृशोधमनिसन्ततः।
ततस्तं गुह्यकं देवी दृष्टिपातैर्निरीक्षती। श्वेतवर्णं विचर्माणं स्नायुबद्धास्थिपञ्जरम्।
देवी प्राह तदा देवं दर्शयन्ती च गुह्यकम्। सत्यं नाम भवानुग्रो देवैरुक्तस्तु शङ्कर!
ईदृशे चास्य तपसि न प्रयच्छसि यद्वरम्। अत्र क्षेत्रे महादेव! पुण्येसम्यगुपासिते।
कथमेवं परिक्लेशं प्राप्तो यक्षकुमारकः। शीघ्रमस्य वरं यच्छ प्रसादात् परमेश्वर!।
एवं मन्वादयो देव! वदन्ति परमर्षयः। रुष्टाद्वाचाथ तुष्टाद्वा सिद्धिस्तूभयतोभवेत्।
भोगप्राप्तिस्तथा राज्यमन्तेमोक्षः सदाशिवात्। एवमुक्तस्ततो देवःसह देव्या जगत्पतिः।
जगाम यक्षो यत्रास्ते कृशोधमनिसन्ततः। तं दृष्ट्वा प्रणतं भक्त्या हरिकेशं वृषध्वजः।
दिव्यञ्चक्षुरदात्तस्मै येनापश्यत् स शङ्करम्। अथ यक्षस्तदा देशाच्छनैरुन्मील्य चक्षुषी।
अपश्यत् सगणं देवं वृषध्वजमुपस्थितम्।

देवदेव उवाच।

वरं ददामि ते पूर्वं त्रैलोक्ये दर्शनं तथा॥ ६१॥
सावर्ण्यं च शरीरस्य पश्य मां विगतज्वरः।

सूत उवाच।

ततः स लब्ध्वा तु वरं शरीरेणाक्षतेन च॥६२॥
पादयोः प्रणतस्तत्थौकृत्वा शिरसिसाञ्जलिम्। उवाचाथतदातेन वरदोऽस्मीतिचोदितः।
भगवन्! भक्तिमव्यग्रां त्वय्यनन्यां विधत्स्व मे।
अन्नदत्वं च ते लोकानां गाणपत्यं तथाऽक्षयम्॥ ६४॥
अविमुक्तं च ते स्थानं पश्येयं सर्वदा यथा। एतदिच्छामि देवेश त्वत्तो वरमनुत्तमम्।

देवदेव उवाच।

जरा मरणसन्त्यक्तः सर्वरोगविवर्जितः। भविष्यसि गणाध्यक्षो धनदः सर्वपूजितः।
अजेयश्चापि सर्वेषां योगैश्वर्यं समाश्रितः। अन्नदश्चापि लोकेभ्यः क्षेत्रपालोभविष्यसि।
महाबलो महासत्वो ब्रह्मण्यो मम च प्रियः। त्र्यक्षश्च दण्डपाणिश्च महायोगी तथैव च।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

द्भ्रमः सम्भ्रमश्चैव गणौतु परिचारकौ । तवाज्ञाञ्च करिष्येते लोकस्योद्भ्रमसम्भ्रमौ

सूत उवाच ।

एवं स भगवांस्तत्र यक्षं कृत्वा गणेश्वरम् । जगाम वामदेवेशः सह तेनामरेश्वरः ॥१००

इति श्रीमत्स्यपुराणे वाराणसीमाहात्म्ये कुबेरवरप्राप्तिर्नामो-
नाशीत्यधिकशततमोऽध्यायः ।

———

# अशीत्यधिकशततमोऽध्यायः

## वाराणसीस्थक्षेत्रमाहात्म्यम् ।

सूत उवाच ।

पुण्योद्भवां स्निग्धांकथां पापप्राशिनीम् । शृण्वन्तु ऋषयःसर्वेसुविशुद्धास्तपोधनाः
गणेश्वरपतिं दिव्यं रुद्रतुल्यपराक्रमम् । सनत्कुमारो भगवानपृच्छन्नन्दिकेश्वरम् ॥२॥
ब्रूहि गुह्यं यथा तत्वं यत्र नित्यं भव स्थितः । माहात्म्यं सर्वभूतानां परमात्मामहेश्वरः
रूपं समास्थाय दुष्करं देवदानवैः । आभूतसंप्लवं यावत् स्थाणुभूतो महेश्वरः ॥४॥

नन्दिकेश्वर उवाच ।

देवेन यत्प्रोक्तं पुराणं पुण्यमुत्तमम् । तत्सर्वं संप्रवक्ष्यामि नमस्कृत्य महेश्वरम् ॥
देवेनतुष्टेन उमायाः प्रियकाम्यया । कथितं भुविविख्यातं यत्र नित्यं स्वयंस्थितः
अर्धासनगता मेरुशृङ्गे यशस्विनी । महादेवं ततो देवी प्रणता परिपृच्छति ॥ ७ ॥
भगवन्! देवदेवेश ! चन्द्रार्द्धकृतशेखर ! । धर्मं प्रब्रूहि मर्त्यानां भुवि चैवोर्ध्वरेतसाम्
दत्तं हुतं चेष्टं तपस्तप्तं कृतञ्च यत् । ध्यानाध्ययनसम्पन्नं कथं भवति चाक्षयम् ॥
जन्मान्तरसहस्रेण यत्पापं पूर्वसञ्चितम् । कथं तत्क्षयमायाति तन्ममाचक्ष्व शङ्कर ! ॥
स्मिन् व्यवस्थितो भक्त्या तुष्यसे परमेश्वर !॥ व्रतानि नियमाश्चैवआचारो धर्मएवच
सिद्धिकरं यत्र ह्यक्षय्यगतिदायकम् । वक्तुमर्हसि तत्सर्वं परं कौतूहलं हि मे ॥१२

महेश्वर उवाच ।

शृणु देवि ! प्रवक्ष्यामि गुह्यानां गुह्यमुत्तमम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सर्वक्षेत्रेषु विख्यातमविमुक्तं प्रिये मम ॥ १३ ॥

अष्टषष्टिःपुराप्रोक्तास्थानानांस्थानमुत्तमम् । यत्रसाक्षात्स्वयंरुद्रःकृत्तिवासाःस्वयंस्थितः
यत्र सन्निहितो नित्यमविमुक्ते निरन्तरम् । तत्क्षेत्रं न मयामुक्तमविमुक्तं ततः स्मृतम् ।
अविमुक्तेपरा सिद्धिरविमुक्ते परा गतिः । जप्तं दत्तं हुतं चेष्टं तपस्तप्तं कृतं च यत् ॥१६
ध्यानमध्ययनं दानं सर्वं भवति चाक्षयम् । जन्मान्तरसहस्रेण यत्पापं पूर्वसञ्चितम् ।
अविमुक्तं प्रविष्टस्य तत्सर्वं व्रजति क्षयम् । अविमुक्ताग्निना दग्धमग्नौ तूलमिवाहितम्
ब्राह्मणाःक्षत्रियावैश्याःशूद्रा वै वर्णसङ्कराः । कृमिम्लेच्छाश्चयेचान्ये सङ्कीर्णाःपापयोनयः
कीटाः पिपीलिकाश्चैव येचान्ये मृगपक्षिणः । कालेन निधनं प्राप्ता अविमुक्तेशृणुप्रिये!
चन्द्रार्द्धमौलिनः सर्वे ललाटाक्षा वृषध्वजाः । शिवे ममपुरे देवि ! जायन्तेतत्र मानवाः
अकामो वा सकामोवाह्यपितिर्यग्गतोऽपि वा । अविमुक्तेत्यजन्प्राणान्ममलोकेमहीयते
अविमुक्तं यदागच्छेत्कदाचित्कालपर्ययात् । अश्मनाचरणौ बद्ध्वा तत्रैवनिधनं व्रजेत्
अविमुक्तं गतोदेवि ! ननिर्गच्छेत्ततः पुनः । सोऽपिमत्पदमाप्नोति नात्रकार्याविचारणा
वस्त्रप्रदं रुद्रकोटिं सिद्धेश्वरमहालयम् । गोकर्णं रुद्रकर्णञ्च सुवर्णाक्षं तथैव च ॥२५॥

अमरञ्च महाकालं तथा कायावरोहणम् ।
एतानि हि पवित्राणि सान्निध्यात् सन्ध्ययोर्द्वयोः ॥ २६ ॥

कालिञ्जरवनञ्चैव शङ्कुकर्णं स्थलेश्वरम् । एतानि च पवित्राणि सान्निध्याद्धि ममप्रिये

अविमुक्ते वरारोहे ! त्रिसन्ध्यं नात्र संशयः ॥ २७ ॥

हरिश्चन्द्रं परं गुह्यं गुह्यमाम्रातकेश्वरम् । जलेश्वरं परं गुह्यं गुह्यं श्रीपर्वतं तथा ॥२८
महालयं तथा गुह्यं कृमिचण्डेश्वरं शुभम् । गुह्यातिगुह्यं केदारं महाभैरवमेव च ॥ २९
अष्टावेतानि स्थानानिसान्निध्याद्धि ममप्रिये !। अविमुक्तेवरारोहे! त्रिसन्ध्यंनात्रसंशयः
यानि स्थानानि श्रूयन्तेत्रिषुलोकेषु सुव्रते ! । अविमुक्तस्य पादेषु नित्यंसन्निहितानि
अथोत्तरांकथांदिव्यामविमुक्तस्यशोभने। स्कन्दोवक्ष्यतिमाहात्म्यमृषीणांभावितात्मनाम्

इति श्रीमत्स्यपुराणे वाराणसीस्थक्षेत्रमाहात्म्यवर्णनं नामा-
शीत्यधिकशततमोऽध्यायः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# एकाशीत्यधिकशततमोऽध्यायः

## वाराणसीमाहात्म्यम् ।

### सूत उवाच ।

सपृष्ठमासीनं स्कन्दं ब्रह्मविदाम्वरम् । पृच्छन्ति ऋषयः सर्वे सनकाद्यास्तपोधनाः
राजर्षयः सर्वे येभक्तास्तु महेश्वरे । ब्रूहित्वंस्कन्द ! भूलोके यत्रनित्यंभवःस्थितः

### स्कन्द उवाच ।

त्मा सर्वभूतात्मा देवदेवः सनातनः । घोररूपं समास्थाय दुष्करं देवदानवैः ॥३॥
भूतसम्प्लवं यावत् स्थाणुभूतस्थितः प्रभुः । गुह्यानां परमं गुह्यमविमुक्तमिति स्मृतम्
विमुक्ते सदा सिद्धिर्यत्रनित्यंव्यवस्थितः । अस्य क्षेत्रस्य माहात्म्यं यदुक्तंत्वीश्वरेणतु
नान्तरं पवित्रञ्च तीर्थमायतनं तथा । श्मशानसंस्थितं वेश्म दिव्यमन्तर्हितञ्च यत्
लोकेनैव संयुक्तमन्तरिक्षे शिवालयम् । अयुक्तास्तु न पश्यन्ति युक्ताः पश्यन्तिचेतसा
चर्यव्रतोपेताः सिद्धा वेदान्तकोविदाः । आदेहपतनाद्यावत् तत्क्षेत्रं यो न मुञ्चति ॥
चर्यव्रतैः सम्यक् सम्यगिष्टंमुखैर्भवेत् । अपापात्मागतिः सर्वा यातूक्ताचक्रियावताम्
त्र निवसेद्विप्रो संयुक्तात्मासमाहितः । त्रिकालमपि भुञ्जानो वायुभक्षसमोभवेत
मात्रमपि यो ह्यविमुक्ते तु भक्तिमान् । ब्रह्मचर्यसमायुक्तः परमं प्राप्नुयात्तपः ॥

यत्र मासं वसेद्धीरोःलब्धाहारो जितेन्द्रियः ।
सम्यक् तेन व्रतं चीर्णं दिव्यं पाशुपतं महत् ॥ १२ ॥

मृत्युभयन्तीर्त्वा स यातिपरमाङ्गतिम् । नैश्रेयसींगतिं पुण्यां तथा योगगतिंव्रजेत्
हि योगगतिर्दिव्या जन्मान्तरशतैरपि । प्राप्यते क्षेत्रमाहात्म्यात् प्रभावाच्छङ्करस्यतु
हा योऽभिगच्छेत्तु अविमुक्तं कदाचन । तस्य क्षेत्रस्य माहात्म्याद्ब्रह्महत्यानिवर्तते
देहपतनाद्यावत् क्षेत्रं यो न विमुञ्चति । न केवलं ब्रह्महत्या प्राकृता च निवर्तते ॥
विश्वेश्वरं देवं न सा भूयोऽभिजायते । अनन्यमानसोभूत्वा यो विमुक्तंनमुञ्चति

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्य देवः सदा तुष्टः सर्वान् कामान् प्रयच्छति ।
द्वारं यत् साङ्ख्ययोगानां स तत्र वसति प्रभुः ॥ १८ ॥
सगणो हि भवो देवो भक्तानामनुकम्पया । अविमुक्तं परं क्षेत्रमविमुक्ते परा गतिः।
अविमुक्ते परा सिद्धिरविमुक्ते परं पदम् । अविमुक्तं निषेवेत देवर्षिगणसेवितम् ॥ २१
यदीच्छेन्मानवो धीमान् न पुनर्जायते क्वचित् । मेरोः शक्तो गुणान् वक्तुं द्वीपानाञ्च तथैव
समुद्राणाञ्च सर्वेषां नाविमुक्तस्य शक्यते । अन्तकाले मनुष्याणां छिद्यमानेषु मर्मसु।
वायुना प्रेर्यमाणानां स्मृतिर्नैवोपजायते । अविमुक्ते ह्यन्तकाले भक्तानामीश्वरः स्वय
कर्मभिः प्रेर्यमाणानां कर्णजापं प्रयच्छति । मणिकर्ण्यां त्यजन्देहं गतिमिष्टां व्रजेन्न
ईश्वरप्रेरितो याति दुष्प्रापामकृतात्मभिः । अशाश्वतमिदं ज्ञात्वा मानुषं बहुकिल्बिष
अविमुक्तं निषेवेत संसारभयमोचनम् । योगक्षेमप्रदं दिव्यं बहुविघ्नविनाशनम् ॥ २६
विघ्नैश्चालोड्यमानोऽपि यो विमुक्तं न मुञ्चति । स मुञ्चति जरामृत्युं जन्म चैतदशाश्वत
अविमुक्ते प्रसादात्तु शिवसायुज्यमाप्नुयात् ॥

इति श्रीमत्स्यपुराणे वाराणसीमाहात्म्यवर्णनं नामैकाशीत्यधिकशततमोऽध्यायः ।

---

# द्व्यशीत्यधिकशततमोऽध्यायः

## वाराणसीमाहात्म्यम् ।

देव्युवाच ।

हिमवन्तं गिरिं त्यक्त्वा मन्दरं गन्धमादनम् । कैलासं निषधञ्चैव मेरुपृष्ठं महाद्युतिम्
रम्यं त्रिशिखरञ्चैव मानसं सुमहागिरिम् । देवोद्यानानि रम्याणि नन्दनं वनमेव च
सुरस्थानानि मुख्यानि तीर्थान्यायतनानि च । तानि सर्वाणि सन्त्यज्य अविमुक्ते रतिः कथ
किमत्र सुमहत् पुण्यं परं गुह्यं वदस्व मे । येन त्वं रमसे नित्यं भूतसम्पद्गुणैर्युत
क्षेत्रस्य प्रवरत्वञ्च ये च यत्र निवासिनः । तेषामनुग्रहः कश्चित्तत् सर्वं ब्रूहि शङ्कर !

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शङ्कर उवाच।

त्यद्भुतमिमं प्रश्नं यत्त्वं पृच्छसि भामिनि। तत् सर्वं सम्प्रवक्ष्यामि तन्मे निगदतः शृणु
राणस्यां नदी पुण्या सिद्धगन्धर्वसेविता। प्रविष्टा त्रिपथा गङ्गा तस्मिन् क्षेत्रे मम प्रिये!
वप्रीतिसन्तुष्टः कृत्तिवासाश्च सुन्दरि! सर्वेषां चैव स्थानानां स्थानन्तत्तु यथाधिकम्

तेन कार्येण सुश्रोणि! तस्मिन् स्थाने रतिर्मम।

तस्मिन् लिङ्गे च सान्निध्यं मम देवि! सुरेश्वरि! ॥ ६ ॥

स्य च प्रवक्ष्यामि गुणान् गुणवताम्वरे। यान् श्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः
दि पापो यदि शठो यदि वा धार्मिको नरः। मुच्यते सर्वपापेभ्यो ह्यविमुक्तं व्रजेद्यदि
ये सर्वभूतानां लोके स्थावरजङ्गमे। न हि त्यक्ष्यामि तत् स्थानं महागणशतैर्वृतः
देवाः सगन्धर्वाः सयक्षोरगराक्षसाः। वक्त्रं मम महाभागे! प्रविशन्ति युगक्षये।
ं साक्षादहं पूजां प्रतिगृह्णामि पार्वति! सर्वगुह्योत्तमं स्थानं मम प्रियतमं शुभम् ॥
याः प्रविष्टाः सुश्रोणि! मम भक्ता द्विजातयः। मद्भक्तिपरमा नित्यं ये मद्भक्तास्तु ते नराः

तस्मिन् प्राणान् परित्यज्य गच्छन्ति परमाङ्गतिम्।

सदा जयति रुद्रेण सदा दानं प्रयच्छति ॥ १६ ॥

तपस्वी भवति अविमुक्तस्थितो नरः। यो मां पूजयते नित्यं तस्य तुष्यामहं प्रिये!
दानानि यो दद्यात् सर्वयज्ञेषु दीक्षितः। सर्वतीर्थाभिषिक्तस्य सप्र पद्येत मामिह ॥
मुक्तं सदा देवि! ये व्रजन्ति सुनिश्चिताः। ते तिष्ठन्तीह सुश्रोणि! त्वद्भक्ताश्च त्रिविष्टपे
सादात्तु ते देवि! दीव्यन्ति शुभलोचने! दुर्द्धराश्चैव दुर्द्धर्षा भवन्ति विगतज्वराः
मुक्तं शुभं प्राप्य मद्भक्ताः कृतनिश्चयाः। निर्धूतपापा विमला भवन्ति विगतज्वराः ॥

पार्वत्युवाच।

यज्ञस्त्वया देव! मत् प्रियार्थे निषूदितः। अविमुक्तगुणानान्तु न तृप्तिरिह जायते

ईश्वर उवाच।

न दक्षयज्ञस्तु त्वत् प्रियार्थे विनाशितः। महाप्रिये! महाभागे! नाशितोऽयं वरानने
मुक्ते यजन्ते तु मद्भक्ताः कृतनिश्चयाः। न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

देव्युवाच ।

दुर्लभास्तु गुणा देव ! अविमुक्ते तु कीर्त्तिताः । सर्वांस्तन्मम तत्वेन कथयस्वमहेश्वर
कौतूहलं महादेव! हृदिस्थं मम वर्तते । तत् सर्वं मम तत्वेन आख्याहि परमेश्वर!।

ईश्वर उवाच ।

अक्षया ह्यमराश्चैव ह्यदाहाश्च भवन्ति ते । मत् प्रसादाद्वरारोहे ! मामेव प्रविशन्ति वै।
ब्रूहि ब्रूहि विशालाक्षि ! किमन्यच्छ्रोतुमिच्छसि ।

देव्युवाच ।

अविमुक्ते महाक्षेत्रे अहो पुण्यमहो गुणाः ॥ २८ ॥
न तृप्तिमधिगच्छामि ब्रूहि देव ! पुनर्गुणान् ।

ईश्वर उवाच।

माहेश्वरि ! वरारोहे ! शृणु तांस्तु मम प्रिये ! ॥२६ ॥
अविमुक्तेगुणायेतु तथान्यानपि तच्छृणु। शाकपर्णाशिनो दान्ताः संप्रक्षाल्यामरीचिपाः
दन्तोलूखलिनश्चान्ये अश्मकुट्टास्तथापरे । मासि मासि कुशाग्रेण जलमास्वादयन्ति वै
वृक्षमूलनिकेताश्च शिलाशय्यास्तथापरे । आदित्यवपुषः सर्वे जितक्रोधा जितेन्द्रियाः
एवं बहुविधैर्धर्मैरन्यत्र चरितव्रताः । त्रिकालमपि भुञ्जाना येऽविमुक्तनिवासिनः ॥३
तपश्चरन्ति वान्यत्र कलां नार्हन्ति षोड़शीम् । येऽविमुक्ते वसन्तीह स्वर्गे प्रतिवसन्ति
मत्समः पुरुषो नास्ति त्वत्समा नास्तियोषिताम् । अविमुक्तसमं क्षेत्रंनभूतंनभविष्यति
अविमुक्तं परो योगो ह्यविमुक्ते परा गतिः । अविमुक्ते परो मोक्षःक्षेत्रं नैवास्तिताद्दृशं
परं गुह्यं प्रवक्ष्यामि तत्वेन वरवर्णिनि!। अविमुक्ते महाक्षेत्रे यदुक्तं हि मया पुरा ॥३
जन्मान्तरशतैर्देवि ! योगोऽयं यदि लभ्यते । मोक्षः शतसहस्रेण जन्मना लभ्यते न वा
अविमुक्तेन सन्देहो मद्भक्तः कृतनिश्चयः । एकेन जन्मना सोऽपि योगं मोक्षं च विन्दति
अविमुक्ते नरा देवि ! ये व्रजन्ति सुनिश्चिताः । ते विशन्ति परंस्थानंमोक्षं परमदुर्लभम्
पृथिव्यामीदृशं क्षेत्रं नभूतंनभविष्यति । चतुर्मूर्त्तिः सदा धर्मो तस्मिन्सन्निहितःप्रिये!
चतुर्णामपि वर्णानां गतिस्तु परमा स्मृता ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

